# चन्दमामा



सम्पुट : १७ सप्टम्बर् सञ्चिका - ६

अन्तरङ्गम्



Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai–600 026 on behalf of Chandamama India Limited, New 82 (Old 92), Defence Officers Colony, Ekkatuthangal,Chennai - 600 097. Editor: Viswam

Editor
**VISWAM**

**ALL CORRESPONDENCE TO:**
Chandamama Magazine
Division
New 82 (Old 92)
Defence Officers Colony
Ekkatuthangal
Chennai - 600 097.
TEL/FAX: 2347384, 2347399.
e-mail: chandamama@vsnl.com

**For USA**
**Single copy $2**
**Annual Subscription**
**$20**
**Mail remittances to**
**INDIA ABROAD**
**43, West 24th Street**
**New York, NY 10010**
**Tel : (212) 929-1727**
**Fax : (212) 627-9503**



*संस्थापकौ –*

**चक्रपाणिः नागिरेड्डी च**

# बालमासम् अधिकृत्य स्पष्टोक्तिः काचित्...

एषः नवम्बर्मासः भारतीयबालानां कृते समर्पितः अस्ति इति वचनं शृणुमः खलु वयम् ? किम् एतस्य तात्पर्यम् ? 'बालानां जीवनं सन्तोषमयं सुसमृद्धं च कर्तुं मार्गान् उपायान् च ज्येष्ठाः चिन्तयेयुः' इति खलु ?

केचन एव एतद्विषये चिन्तयेयुः नाम । बहवः एतद्विषये औदासीन्यं भजन्ते चेत् ...? किम् उत्तरसम्भावनार्थं कालयापनेन ? एतस्य देशस्य सर्वे ज्येष्ठाः (महिलाः पुरुषाः च) बालानां भविष्यविषये चिन्तयेयुः चेदपि वास्तविकतया बालानाम् उज्ज्वलं भविष्यं तान् एव अवलम्बते, न तु ज्येष्ठान् । अतः बालाः स्वभविष्यस्य निर्मातारः स्वयम् एव भवेयुः ।

एतत् कथं सम्भवेत् ?

वयम् आदौ परिस्थितिं विमृशाम किञ्चित् । अस्माभिः बालाः तादृश्याः परम्परायाः उत्तराधिकारिणः विधीयमानाः सन्ति, या च इदानीम् एव अतिघोरा विकृतविषयाणाम् आकरभूता च अस्ति । प्राकृतिकासमतोलनकारणतः अपायस्थितिं गतायां भूमौ तान् वसयन्तः स्मः । कथम् एतत्सम्पन्नम् ? अस्माकं जीवनदृष्टिः एव अत्र कारणम् । 'अधिकारः सम्पत्तिः च अस्ति चेत् सुखं प्राप्यते, इत्येतस्मिन् निन्द्यसिद्धान्ते वयं श्रद्धावन्तः ! एतस्य फलरूपेण एव राजकीय-धार्मिक-व्यावहारिकादिषु सर्वेषु क्षेत्रेषु अहितकरी स्पर्धा ! मात्स्यन्यायस्य विजृम्भणम् !! वस्तुतः तु सन्तोषः तत्तज्जनस्य अन्तश्चैतन्यं, समचित्ततां, चारित्र्यं च अवलम्बते, न तु बाह्यं कञ्चन अंशम् । अतः स्पष्टं यत् स्वस्य सन्तोषस्थितिं स्वयम् एव सम्पादयेत् बालः स्वप्रयत्नेन । प्रीतिपात्रभूताः मातापितरः अपि तां स्थितिं तस्मै 'दातुं' न अर्हन्ति । उद्धरेत् आत्मनात्मानम् ।

यतः चन्दमामा भवत्सु विश्वसिति, अतः सा स्पष्ट्योक्त्या एव सर्वं विशदीकृतवती अस्ति ।

# वार्ताविशेषाः

## रक्षणस्य अपूर्वः क्रमः



चतुर्दशवर्षीयः डेविड्सीसीनामकः बालकः कदाचित् पित्रा सह मान्प्रडोनियां (दक्षिण-इटलीदेशीयां) प्रति नौकया प्रयाणं कुर्वन् आसीत् । महातरङ्गकारणतः मध्येसमुद्रं नौका अधोमुखी जाता, डेविडः च जले अपतत् । डेविडः तरणं न जानाति स्म । अतः सः जले निमज्जनं प्राप्तवान् इव । तावता २.७. मीटर्दीर्घः, सन्तोषेण नौकाम् अनुसरन् आगतः कश्चित् डाल्फिनः निमज्जन्तं डेविडम् अपश्यत् । तं च स्वपृष्ठस्य उपरि स्थापयितुं प्रयत्नम् अकरोत् । एतस्मात् डेविडः अवगतवान् यत् एषः डाल्फिनः मम साहाय्यं कर्तुम् इच्छति इति । अतः सः तस्य शरीरं दृढं गृहीतवान् । यदा नौका आसन्ना तदा डाल्पिनः तम् उन्नीतवान् । ततः तस्य पिता तं नौकां प्रति स्वीकृतवान् । तत्प्रदेशे निवसन्तः धीवराः एतां घटनां ज्ञात्वा 'फिलिप्' इति तस्य नाम निर्दिश्य तं स्वस्य शुभचिह्नं मतवन्तः ।

## यावत् न रक्षणं तावत् कूपे...



अकबरः केरलीयः चतुर्दशवर्षीयः कश्चन बालकः । एकदा सः शालातः प्रत्यागत्य यावत् उपाहारं सेवमानः आसीत् तावता बहिः कश्चन क्रन्दनस्वरः श्रुतः । प्रतिवेशिबालकः आक्रोशन् आसीत् । द्विवर्षीयां बालिकां ८ मीटर्गभीरे कूपे पतितां दृष्ट्वा तथा कृतवान् आसीत् सः । विषयं ज्ञात्वा अकबरः उपाहारसेवनं परित्यज्य बहिः धावितवान् । कूपे कूर्दनं कृत्वा वामहस्तेन तां बालिकाम् उन्नीय दक्षिणहस्तेन जलनालं .(pipe) गृहीतवान् । तावता महिलानां समूहः एव कूपसमीपम् आगतः । किन्तु रोदनात् कोलाहलात् च ऋते किमपि कर्तुं तेन न शक्तम् । ततः ९० निमेषाणाम् अनन्तरं पुरुषाः अपि तत्र सम्मिलिताः । ते द्रोणीं कूपस्य अन्तः प्रेषयित्वा बालिकाम् उपरि आनीतवन्तः । अकबरस्य उपवेशनार्थं द्रोणी अपर्याप्ता आसीत् । रज्जुसाहाय्येन उपरि आगमनार्थं तस्य शरीरे शक्तिः न आसीत् । अन्ते रज्जुसाहाय्येन कश्चन आसन्दः तैः प्रेषितः । तत्र उपविश्य डेविडः उपरि आगतः । तस्य धैर्यं समयस्फूर्तिः च खलु प्रशंसार्हम् ?

# गजं नियन्त्रयति बालिका



वयं कदाचित् श्रुतवन्तः स्याम यत् जन्तुशालायां आहारादिवितरणार्थं महिलाः नियोज्यन्ते क्वचित् इति । किन्तु गजनिग्रहे महिलानियोजनं तावत् अश्रुतपूर्वम् । विजयलक्ष्मीः द्वादशवर्षीया बालिका । तया निगृह्यते दशपादोन्नतः ३१ वर्षीयः महागजः । केरलस्य त्रिशूर्जनपदे जातः अशोककुमारः बिहारतः एकं गजम् आनायितवान् । तम् आनीतवतां हस्तिपकानां प्रतिगमनस्य अनन्तरं अशोककुमारेण ज्ञातं यत् अयं श्रीकृष्णः हिन्दीमात्रं जानाति इति । अशोककुमारः दिग्भ्रान्तः । प्रतिदिनं सञ्चारार्थम् एषः कथं वा नेतव्यः इति तेन न ज्ञातम् । तदा तस्य आवुत्तः असूचयत् एकम् उपायम् - ''सप्तमकक्ष्यायां पठन्ती भवतः पुत्री हिन्दीं जानाति खलु ? ताम् एव एतस्मिन् कार्ये नियोजयतु'' इति । अनन्यगतिकेन अशोककुमारेण तथैव कृतम् । विजयलक्ष्मीः यदा 'चल' 'अपसर' 'तिष्ठ' इति आज्ञाः हिन्दीभाषया प्रादात् तदा गजः ताः आज्ञाः अपालयत् । अल्पे एव काले गज-विजयलक्ष्म्योः मैत्री प्रवृद्धा । इदानीं विजयलक्ष्मीः प्रतिदिनं विद्यालयात् प्रत्यागत्य तं गजं वायुविहारार्थं नयति । विना भीतिम् आज्ञाभिः तं नियन्त्रयति सा ।

# वज्रदन्तिनी !!



मध्यप्रदेशस्य दतियाप्रदेशे निवसन्तीं सीमाबडेरियां भवन्तः मा पृच्छन्तु यत् भवती किन्नामकस्य दन्तफेनस्य दन्तचूर्णस्य वा उपयोगं करोति इति । दशमकक्ष्यायां पठन्ती सा - 'प्रसिद्धदन्तफेननाम्नां प्रश्नेन किम् ? दन्तैः मया क्रियमाणं विमानाकर्षणं पश्यन्तु भवन्तः' इति वदेत् । भोपालीये भैरागढ्विमानस्थानके चतुर्दशासनयुक्तं सर्वकारीयं विमानं दन्तैः आकृष्टवती अस्ति सा । सा अभिलषति यत् ७४७-बोयिङ्ग्विमानम् एव दन्तैः आकृष्य गिन्नीसुपुस्तके स्वनाम योजनीयम् इति । एतां वार्तां पठितवतां भवतां दन्ताः तु कम्पमानाः न जाताः स्युः खलु ?

# एतन्मासे जातः महापुरुषः

स्वतन्त्रभारतस्य प्रथमः प्रधानमन्त्री जवहरलाल-नेहरूवर्यः बालानां गणे 'चाचा' इत्येव प्रसिद्धः। १८८९ तमे वर्षे नवम्बर्मासस्य १४ दिनाङ्के प्रयाग(अलहाबाद)नगरे एतस्य जन्म जातम्। सः बालेषु विशेषतः स्निह्यति स्म यत् तदर्थं तदीयं जन्मदिनं १९५७ तमवर्षात् आरभ्य बालदिवसत्वेन आचर्यते।

जवहरलालस्य पिता मोतीलालनेहरू प्रसिद्धः न्यायवादी भारतीयराष्ट्रिय-काङ्ग्रेस्संस्थायाः नायकः च आसीत्। सः स्वपुत्रस्य शिक्षणव्यवस्थां स्वगृहे एव अकरोत् १४ वर्षान्तं यावत्। ततः जवाहरः लण्डन्समीपे स्थितं हारो-विद्यालयं प्रति प्रेषितः। केम्ब्रिज् विश्वविद्यालयतः ब्यारिष्टर् पदं प्राप्य सः १९१२ तमे वर्षे भारतं प्रत्यागतः।



जवहरलाल नेहरू

पितुः वृत्तिः एव तेन अनुवर्त्यते इति सर्वैः चिन्तितम् आसीत्। किन्तु जवहरवर्यः न्यायवादिवृत्तिं परित्यज्य पितुः राजनैतिकमार्गम् एव अनुसृतवान्। १९१६ तमे वर्षे लखनऊनगरे प्रवृत्ते काङ्ग्रेस्-अधिवेशने सः गान्धिवर्येण मिलितः। एतस्य महान् परिणामः जातः तस्य जीवने।

सः तदनन्तरकाले पूर्णरूपेण राजनैतिकव्यवहारे निमग्नः जातः। १९१३ तमवर्षस्य एप्रिल्मासे १३ दिनाङ्के आङ्ग्लाधिकारी जनरल् डायरः अमृतसरसमीपस्थे जलियन्वालाबाग्नामके प्रदेशे शान्तिसभायां भागं वोढुम् आगतान् निरपराधिनः जनान् महिलाः बालान् च उद्दिश्य गोलकास्त्रप्रयोगम् आदिष्टवान्। एतस्य परिणामतः चतुश्शताधिकाः जनाः मरणं प्राप्तवन्तः, सहस्रशः जनाः व्रणिताः च अभवन्। ज़वहरलालवर्यः एतं नृशंसकृत्यं दृष्ट्वा निश्चितवान् यत् यावत् आङ्ग्लेयाः भारतात् न निर्गच्छन्ति तावत् एषा अत्याचारपरम्परा समाप्ता न भविष्यति इति। 'एतम् अत्याचारं विरुध्य मया कार्यं करणीयम्' इति सङ्कल्पितवान् सः।

ततः सः राष्ट्रकार्ये आत्मानं पूर्णरूपेण समर्पितवान्। १९२८ तमे वर्षे सः भारतीयकाङ्ग्रेस्-संस्थायाः महासचिवत्वं प्राप्तवान्। अनन्तरवर्षे सः तस्याः संस्थायाः अध्यक्षः अपि जातः। असहकार-आन्दोलनस्य नेतृत्वं वहन् सः अनेकवारं कारागारम् अपि गतवान्।

१९४७ तमे वर्षे भारतं यदा स्वतन्त्रं जातं तदा सः भारतस्य प्रथमप्रधानमन्त्री जातः। १७ वर्षाणि यावत् सः तस्मिन् एव पदे तिष्ठन् सामाजिकसमस्यानां निवारणे विशेषावधानवान् आसीत्। १९६४ तमे वर्षे जुलैमासस्य २७ तमे दिनाङ्के सः दिवं गतः।

एतच्छताब्द्याः श्रेष्ठव्यक्तिषु अन्यतमः शान्तिदूतः नेहरूवर्यः उत्तमः कृतिकारः अपि आसीत्। तेन एकमात्रपुत्र्यै इन्दिरावर्यायै लिखितानां पत्राणां सङ्ग्रहः 'ग्लिम्प्सस् आफ् वर्ल्ड् हिस्ट्री' नामकः ग्रन्थः अत्युत्कृष्टः अस्ति। तदीये कृती 'आत्मकथा' 'डिस्कवरी आफ् इण्डिया' च तदीयं लेखन-सामर्थ्यातिशयं निरूपयतः।

वेताल-कथा

# द्वौ राजकुमारौ

दृढव्रतः त्रिविक्रमः पुनरपि वृक्ष-समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं वेगेन श्मशानं प्रति प्रस्थितवान् । तदा शवान्तर्गतः वेतालः अवदत् – ''राजन्, मध्यरात्रे एतस्मिन् श्मशाने भवान् निर्भयेन श्रद्धया च किमर्थं कार्यरतः अस्ति ? अहं चिन्तयामि यत् भवतः लक्ष्यम् अन्यत् किमपि स्यात् इति । एतदर्थं भवान् मृत्युं सम्मुखीकर्तुम् अपि सिद्धः खलु । भवादृशौ एव निर्भीकौ, दृढचित्तौ, आदर्शगुणानाम् आराधकौ च पूर्वम् आस्ताम् । लक्ष्यस्य प्राप्त्यर्थं ताभ्यां यः महान् परिश्रमः कृतः, अनेकानि कष्टानि यानि सम्मुखीकृतानि, तानि सर्वाणि व्यर्थानि अभवन् । तां कथां स्मरतः ममापि मनसि भवतः विषये महती एव चिन्ता



उत्पन्ना अस्ति । भवतः स्थितिः अपि तयोः इव न स्यात् खलु ? अतः अहम् अवश्यं तयोः कथां श्रावयमि । तेन वा भवान् आत्मानं परिष्कृत्य विवेकं प्राप्य एतत् व्यर्थकार्यं परित्यजेत्'' इति ।

अनन्तरं वेतालः कथाम् आरब्धवान् -

प्रणयपुरराज्यं चन्दनपुरराज्यस्य प्रतिवेशिराज्यम् । तत् राज्यद्वयमपि प्रचण्डगिरिराज्यस्य अधीनम् आसीत् । चन्दनपुरराज्यस्य राज्ञः चन्दनदत्तस्य एका एव पुत्री । तस्याः नाम जयन्ती इति । सा अत्यन्तं सुन्दरी । चन्दनदत्तः स्वपुत्रीं पुत्रवत् पालयन् तस्यै सर्वविधक्षत्रियोचितशिक्षणस्य व्यवस्थां कारितवान् । यदा सा प्राप्तवयस्का अभवत् तदा तस्याः सौन्दर्यं विकसितम् ।

कदाचित् सा सखीभिः सह विहारार्थं वनं गतवती । तदा भिल्लकुलस्य प्रमुखः कश्चित् एकं लघुं श्वेताश्वम् उपायनरूपेण तस्यै दत्तवान् । सा तम् अश्वम् अश्वशालायां स्थापयित्वा तस्य निमित्तं सर्वाः व्यवस्थाः कृतवती । सा प्रतिदिनं स्वहस्तेन एव तस्मै तृणं जलं च ददाति स्म ।

एतस्य उपरि उपविश्य सञ्चारः करणीयः इति राजकुमार्याः इच्छा अभवत् । किन्तु सा अश्वचालनं न जानाति स्म । अतः सा महता प्रयत्नेन पक्षाभ्यन्तरे एव अश्वचालनम् अभ्यस्तवती । वेगेन अश्वचालने अपि समर्था अभवत् सा । अश्वः अपि वायुवेगेन धावति स्म । यथा श्वेतः अश्वः धावति तथा धावितुम् अश्वशालायां स्थितेषु अश्वेषु कोऽपि समर्थः न आसीत् । तेषु एव दिनेषु प्रचण्डगिरिराज्यस्य ग्रामवासिनः राज्ञः समीपं गत्वा - ''महाप्रभो ! वनगजाः अस्माकं क्षेत्रस्य सस्यानि नाशयन्तः सन्ति । कृपया वयं रक्षणीयाः'' इति निवेदितवन्तः ।

प्रजानां प्रार्थनां श्रुत्वा महाराजः झटिति पुत्रम् आदिष्टवान् यत् ते गजाः निग्रहणीयाः इति । पितुः आज्ञाम् अनुसृत्य राजकुमारः रुद्रकेतुः कैश्चित् सैनिकैः सह अरण्यं प्रति प्रस्थितवान् । सैनिकेषु पश्यत्सु केचन गजाः ग्रामस्य दिशि प्रस्थिताः । तदा केचन सैनिकाः भेरीवादनम्, अन्ये केचन बाणवर्षणं च कृतवन्तः । अनिरीक्षितरूपेण जातात् प्रहारात् भीताः गजाः पुनश्च अरण्यं प्रति अधावन् ।

प्रातः राजकुमारः रुद्रकेतुः सैनिकैः सह चन्दनपुरस्य राज्ञः चन्दनदत्तस्य समीपं

गतवान् । चन्दनदत्तः रुद्रकेतोः स्वागत कृत्वा वासव्यवस्थां कल्पितवान् । तस्मिन् काले रुद्रकेतुः राजकुमारीं जयन्तीं दृष्टवान् । तस्याः सैन्दर्येण आकृष्टः सः निर्णीतवान् यत् एषा एव मया परिणेतव्या इति ।

पुनः कदाचित् सः श्वेतम् अश्वं दृष्ट्वा चन्दनदत्तम् अवदत् - ''अहो, अश्वः नाम एषः एव । मह्यम् एषः अश्वः आवश्यकः'' इति । तस्मिन् एव समये जयन्ती तेन मार्गेण गच्छन्ती आसीत् । सा रुद्रकेतोः वचनं श्रुत्वा - ''अस्माकं परतया भवते लघु-उपायन-रूपेण एतम् अश्वं ददामि । कृपया अश्वं नयतु भवान्'' इति अवदत् ।

केषाञ्चित् दिनानाम् अनन्तरं नवरात्रोत्सवः आगतः । तस्य उत्सवस्य निमन्त्रणं स्वीकृत्य प्रणयपुरस्य युवराजः वैभववर्मा चन्दनपुरम् आगत्य चन्दनदत्ताय निमन्त्रणं दत्तवान् । युवराजः स्वयं तत्र आगतवान् यत्, तस्य कारणम् अन्यत् एव आसीत् । जयन्तीवैभवौ परस्परम् अनुरक्तौ आस्ताम् ।

तद्दिने सायं यदा जयन्ती वैभववर्मणा मिलितवती तदा अश्वसम्बन्धिनीं वार्तां निवेदयन्ती खेदेन - ''अहं रुद्रकेतवे अश्वं तु दत्तवती । किन्तु अश्वदानविषये मम महान् खेदः अस्ति । कृतस्य कृत्यस्य विषये अद्यापि पश्चात्तापम् अनुभवामि । अन्यच्च रुद्रकेतोः अहङ्कारप्रवृत्तिः अपि मां बाधते'' इति ।

तदा युवराजः वैभववर्मा - ''सः चक्र-वर्तिनः पुत्रः । वयं तु सामन्ताः । अतः भवती अश्वं विस्मरति चेत् एव वरम् इति भाति'' इति वदन् जयन्तीं समाश्वासितवान् ।



परेद्यवि एव वैभववर्मा स्वराज्यं प्रतिगतवान् । तत्र कस्यचित् मन्दिरस्य नवीकरणं प्रचलति स्म । यदा कर्मकराः प्राचीनां भित्तिं पातयन्तः आसन् तदा तैः प्रकाशमानः कश्चित् नील-मणिः दृष्टः । वैभवः तस्य पिता च निश्चित-वन्तौ यत् नवरात्रोत्सवसमये देव्यै समर्प्यमाणे मुकुटे एषः मणिः योजनीयः इति ।

गुप्तचरद्वारा एषः विषयः रुद्रकेतुना ज्ञातः । अनुक्षणं सः वैभववर्मणः पित्रे वीरसेनाय आदेशं प्रेषितवान् - ''सद्यःकाले एव मम राज्याभिषेकः भविष्यति । मम तीव्रा इच्छा अस्ति यत् भवतः राज्ये प्राप्तः मणिः मम मुकुटे शोभताम् इति । अतः भवान् शीघ्रमेव तं मणिं मह्यं प्रेषयतु'' इति ।

विषयं ज्ञात्वा वीरसेनः चिन्ताक्रान्तः



जातः । एतत् दृष्ट्वा वैभववर्मा पितरम् अपृच्छत् - ''पितः ! किमर्थं व्याकुलता ? वयं तु मणिं स्वनिमित्तम् उपयोक्तुं न इष्टवन्तः । देव्यैः खलु समर्पणीयम् इति चिन्तितम् आसीत् ? तर्हि राजकुमाराय दानविषये चिन्ता किमर्थम् ? मणेः दानेन प्रजाः अपि सुखिन्यः स्युः'' इति ।

सप्ताहाभ्यन्तरे वैभवः प्रचण्डगिरिं गत्वा रुद्रकेतवे मणिं समर्पितवान् । ततः सप्ताहानन्तरं प्रणयपुरे नवरात्रोत्सवः आरब्धः । पूर्वदिने एव चन्दनपुरतः राजा, राज्ञी, जयन्ती च प्रणयपुरे उपस्थिताः आसन् । उत्सवस्य अन्तिमदिने राजकुमारः रुद्रकेतुः तत्र आगतवान् । वीरसेनः तस्य भव्यस्वागतं कृतवान् । परेद्यवि प्रातः वसन्तोत्सवः आरब्धः । राजगृहस्य पुरतः हरिद्रा-चन्दन-कुङ्कुमेन युक्तं जलं सुवर्णपात्रे स्थापितवान् आसीत् वैभववर्मा । लघुपात्रे ततः जलं स्वीकृत्य तेन जयन्त्याः उपरि सेचनं कृतवान् सः । जयन्ती कोपं प्रदर्शयन्ती इव वैभववर्मणः हस्तात् पात्रम् आकृष्य तस्य उपरि जलसेचनं कर्तुं तम् अनुसृतवती । एतत् दृश्यं दृष्ट्वा रुद्रकेतुः असूयाग्रस्तः अभवत् । सः चिन्तितवान् यत् विलम्बकरणेन जयन्ती कदाचित् हस्तच्युता भवेत् इति । अतः सः झटिति उत्थाय चन्दनदत्तसमीपं गत्वा - ''राजन् ! आगामिकार्तिकद्वादश्यां मम राज्याभिषेकः भविष्यति । तस्मिन् शुभावसरे अहं भवतः पुत्रीं जयन्तीं परिणेतुम् इच्छामि । भवतः आक्षेपः कोऽपि न स्यात् इति भावयामि'' इति अवदत् ।

राजकुमारस्य वचनं श्रुत्वा चन्दनदत्तः हतप्रभः अभवत् । पार्श्वे उपविष्टः वीरसेनः अपि आश्चर्यचकितः सन् चन्दनदत्तस्य मुखं दृष्टवान् । अनन्तरं द्वौ अपि मौनम् आश्रितवन्तौ । तयोः मौनस्य रहस्यं जानन् रुद्रकेतुः क्रुद्धः सन् - ''यदि भवान् पुत्र्याः विवाहं मया सह निर्वर्तयितुं न इच्छति तर्हि स्पष्टं वदतु तावत् । यत् अहं प्राप्तुम् इच्छामि तत् कथञ्चित् प्राप्स्यामि एव'' इति उक्तवान् ।

अनतिदूरे एव स्थितौ जयन्तीवैभवौ रुद्रकेतोः ध्वनिं श्रुतवन्तौ । उभौ अपि समीपम् आगत्य चन्दनदत्तं पृष्टवन्तौ - ''किम् अभवत् ?'' इति । किन्तु चन्दनदत्तः स्वस्य असहायकतां प्रदर्शयितुं न इष्टवान् ।

तदा रुद्रकेतुः एव उक्तवान् - ''प्रवृत्तम्

अहं विवृणोमि । भवती सद्यःकाले एव प्रचण्डगिरेः महाराज्ञी भविष्यति । एताम् आनन्दस्य वार्तां श्रुत्वा भवत्याः पिता आनन्देन दिङ्मूढः अभवत् । अतः तस्य मुखात् शब्दाः न निर्गच्छन्ति'' इति ।

रुद्रकेतोः वचनं श्रुत्वा जयन्ती अनुक्षणं - ''क्षम्यताम् ! राजकुमार ! अहं भवतः प्रस्तावं तिरस्कुर्वती अस्मि । अहं भवता सह मम विवाहस्य प्रस्तावं सर्वथा न इच्छामि । यतः मया कः परिणेतव्यः इति एतावता एव निश्चितम् अस्ति'' इति अवदत् ।

तदा क्रुद्धः रुद्रकेतुः - ''अहो, एषः वा विषयः ? एषः वैभववर्मा तु सामन्तपुत्रः । अहं श्वः एव पितुः अनुज्ञां प्राप्य भवत्याः, वैभववर्मणः च राज्यं आक्रम्य वशीकरिष्यामि । तदा भवत्याः वैभववर्मा मरणदण्डनात् विमोचनं प्राप्तुं न शक्नोति । अनन्यगतिकतया भवत्या विवाहप्रस्तावः अङ्गीकरणीयः एव भविष्यति'' इति उक्तवान् ।

वैभववर्मा रुद्रकेतोः वचनं सोढुम् अशक्नुवन् उक्तवान् - ''एतावान् आवेशः न शोभते राजकुमार ! ज्येष्ठैः अपि मम जयन्त्याः च विवाहार्थम् अनुमतिः दत्ता अस्ति । वैयक्तिककारणेन अस्माकं राज्यस्य उपरि आक्रमणकरणं धर्मविरुद्धम्'' इति ।

वैभववर्मणः वचनेन रुद्रकेतोः कोपः प्रवृद्धः । क्रोधोन्मत्तः सः - ''मूर्ख ! जिह्वायाः नियन्त्रणं भवतु । भाविनः महाराजस्य मम पुरतः धाष्ट्र्यं प्रदर्शयति खलु भवान् ? शिष्टाचारः किं न ज्ञायते ?'' इति अपृच्छत् ।

अपरक्षणे वैभववर्मा खड्गस्य उपरि हस्तं




स्थापयन् - ''राजकुमार ! किं विवादेन ? उभौ अपि खड्गयुद्धं करवाव । यः जयं प्राप्स्यति सः जयन्तीं परिणयतु । एतस्मात् त्रिषु अपि राज्येषु युद्धभीतिः अपगता भविष्यति । खड्गः ध्रियताम्'' इति अवदत् ।

वैभववर्मणः पराक्रमयुक्तं वचनं श्रुत्वा रुद्रकेतुः क्षणकालं दिग्भ्रान्तः । किञ्चित् विचिन्त्य सः शान्तस्वरेण अवदत् - ''वैभववर्मन् ! खड्गयुद्धस्य का वा आवश्यकता ? जयन्तीनिमित्तं खलु तादृशयुद्धस्य प्रस्तावः उत्पन्नः ? जयन्तीं भवान् एव परिणयतु, सुखेन जीवतु च । तस्याः विषये मया अनुचितव्यवहारः दर्शितः । तदर्थम् अहं खिन्नोऽस्मि । तां क्षमां याचे'' इति ।

वेतालः एवं कथां समाप्य अवदत् -

''राजन् ! श्वेताश्वे विशेषप्रीतिमती अपि राजकुमारी जयन्ती रुद्रकेतवे तं दत्तवती, दानानन्तरं पश्चात्तापम् अनुभूतवती च । वैभववर्मा अपि - 'प्रवृत्तस्य विस्मरणं श्रेयसे' इति ताम् उपदिष्टवान् । प्राप्तं नीलमणिम् अपि सः रुद्रकेतवे उपायनीकृतवान् । एतस्य सर्वस्य अवलोकनात् अवगम्यते यत् रुद्रकेतुतः वैभववर्मा भीतः इति । एतादृशः सः जयन्तीविषये किमर्थं वा खड्गम् आकृष्य रुद्रकेतुं सम्मुखीकर्तुम् उद्युक्तः ? तेन यदा खड्गः गृहीतः तदा रुद्रकेतुः किमर्थं वा – 'भवान् एव जयन्तीं परिणीय सुखेन जीवतु' इति उक्तवान् ? किं भीरुः सः ? मम तु भासते यत् उभौ अपि राजकुमारौ भीरू, स्वार्थैकचिन्तकौ च इति । न तयोः स्थिरता, न वा निर्भीकता । आत्मनः बलशालित्वं ख्यापयितुम् इच्छन्तौ तौ नटौ एव खलु ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः अवदत् - ''स्वार्थैकपरता, बुद्धिमत्ता इत्यादयः तत्तज्जनस्य स्वभावम् अनुलक्ष्य निर्णेतव्याः । रुद्रकेतुः वैभववर्मा च जयन्त्याः सौन्दर्यं दृष्ट्वा तां परिणेतुं सिद्धौ आस्ताम् । एतावता एव तौ स्वार्थिनौ इति निर्णयः न उचितः । यदा पराजयसम्भावना दृश्यते तदा महाशूरः अपि युद्धात् विरमति । तावता सः भिरुत्वेन निर्देष्टुं न अर्हः । 'जयन्त्याः निमित्तं युद्धम् आवयोः उभयोः मध्ये एव प्रवर्तताम्' इति उक्त्वा वैभववर्मा खड्गं गृहीतवान् । सामान्य-जनानां पीडनं न इष्टवान् सः । व्यक्तिगत-कारणस्य निमित्तं देशत्रयस्य कष्टे पातनम् अनुचितम् इति तस्य निर्णयः आसीत् । रुद्रकेतुः अपि प्रजानां हितार्थं न्यायमार्गम् अनुसर्तुम् इष्टवान् । अतः सः विवादपरिहारे मतिं कृतवान् । यद्यपि सः किञ्चित् रूक्षः, तथापि बुद्धिमान् विवेकी च इत्यत्र नास्ति संदेहः । अतः एव तेन तादृशः निर्णयः कृतः । अतः वैभववर्मा, रुद्रकेतुः वा न भीरू, न वा स्वार्थैकचिन्तकौ'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः अदृश्यः भूत्वा वृक्षस्य शाखाम् अवलम्बितवान् ।





# चोरस्य आत्मगौरवम्

परिश्रमी कुलदीपः मदिरायाः अक्ष-क्रीडायाः च दासः अभवत् । सः यावत् धनम् आर्जयति, तत्सर्वं दुरभ्यासकारणतः एव व्ययीभवति स्म । तस्य पत्नीपुत्रादयः बुभुक्षया पीडिताः सन्तः कष्टम् अनुभवन्ति स्म । तथापि सः एतत्सर्वम् अजानन् इव मौनेन तिष्ठति स्म ।

कदाचित् कुलदीपः अस्वस्थः अभवत् । दिने दिने सः क्षीणतां गतः । सः मञ्चतः उत्थातुम् अपि कष्टम् अनुभवति स्म । पत्नी-पुत्राः यदा वैद्यम् आह्वातुम् इष्टवन्तः तदा वैद्यः धनं विना औषधदानं निराकृतवान् । वैद्याय दातुं कुलदीपस्य गृहे धनं सर्वथा न आसीत् । कोऽपि तेभ्यः ऋणं दातुम् अपि न इच्छति स्म ।

तेषु एव दिनेषु दयामयः नाम कश्चित् तं ग्रामं प्रति आगतवान् । सः उदारः आसीत् । निर्निमित्तं सर्वेषां साहाय्यं करोति स्म सः । अनन्यगतिका कुलदीपस्य पत्नी गौरी साहाय्यं प्रार्थयितुं दयामयस्य समीपं गतवती ।

दयामयः अवदत् - "अहं भवत्याः ऋणं न प्रत्यर्पयामि एव । तेन सह भवत्याः पत्युः चिकित्साम् अपि कारयामि । किन्तु भवत्याः पत्या अनन्तरकाले मम समीपे एव कार्यं करणीयम् । मया उक्ताः नियमाः तेन पालनीयाः । एतद्विषये भवत्याः अङ्गीकारः अस्ति चेत् वदतु" इति । दयामयेन उक्ताः नियमाः सामान्याः एव आसन् इत्यतः गौरी तान् नियमान् अनुक्षणम् अङ्गीकृतवती ।

'गौरी झटिति एव अङ्गीकुर्यात्' इति दयामयेन न निरीक्षितम् आसीत् । सः आरम्भे न विश्वसितवान् एव । अतः नियमावलीं



एकस्मिन् कागदे विलिख्य गौर्याः हस्ताङ्कनं कारितवान् । पश्चात् सः सेवकान् उक्त्वा कुलदीपं स्वचिकित्सालयं प्रवेशितवान् । पञ्चषेषु दिनेषु एव कुलदीपः पूर्णतया स्वस्थः अभवत् । सः सम्यक् चलितुम् अपि समर्थः जातः । सर्वेभ्यः कृतज्ञताः समर्प्य सः गृहं गन्तुम् उद्युक्तः अभवत् ।

''कुत्र गच्छति भोः ? इतःपरं भवता मम समीपे एव कार्यं करणीयम्'' इति दयामयः तम् अवदत् । कुलदीपः दयामयस्य शक्तिं अभिज्ञातवान् आसीत् । पत्न्या दत्तं वचनमपि स्मृतवान् सः । कथञ्चित् इतः विमोचनं न शक्यम् इति ज्ञातं तेन । अतः सः विना वचनं दयामयेन उक्ते कार्ये आत्मानं योजितवान् ।

प्रातर्विधेः समाप्तेः अनन्तरं सः पूर्वदिनस्य शीतलं भोजनं प्राप्नोति स्म । चतस्रः घण्टाः निरन्तरं तेन कार्यं करणीयं भवति स्म । अनन्तरमेव गौरी गृहे निर्मितम् उष्णं भोजनम् आनीय ददाति स्म । किञ्चित्कालस्य विश्रान्तेः अनन्तरं पुनरपि चतस्रः घण्टाः तेन कार्यं करणीयं भवति स्म । रात्रौ गौरी भोजनम् आनयति स्म । तदा एव सः पत्नी-पुत्रादिभिः सह किञ्चित्कालं यापयितुं शक्नोति स्म ।

एवम् एव एकः मासः अतीतः । कार्य-निमित्तं यत् वेतनं कुलदीपेन प्राप्तव्यम् आसीत् तत् गौर्यै दत्तवान् दयामयः । वेतनदिने कुलदीपः पत्न्याः पुरतः रोदनं कृतवान् । ''मां कथञ्चित् इतः मोचयतु । चोरवत् अत्र जीवनयापनं मया सोढुं न शक्यते । भवती तु पुत्रैः सह सुखेन जीवनं यापयन्ती अस्ति । अहं तु अपेक्षितं वस्तु प्राप्तुम् अशक्नुवन् कष्टेन जीवन् अस्मि'' इति स्वदुःखं प्रकटितवान् । पत्युः परिस्थितिं ज्ञातवती गौरी अपि खिन्ना । पत्युः विषये तस्याः मनसि करुणा उत्पन्ना । सा दयामय-समीपं गत्वा उक्तवती – ''स्वामिन्, भवता यत् साहाय्यं कृतं तदर्थम् अहम् अत्यन्तं कृतज्ञा अस्मि । परन्तु भवान् मम पत्या सह चोरेण इव व्यवहरन् अवमाननं कुर्वन् अस्ति । एतेन अहम् अपि कष्टम् अनुभवन्ती अस्मि । यदि भवान् इच्छति तर्हि मम पत्युः स्थाने अहं कार्यं कर्तुं सिद्धा अस्मि । मम पतिं बन्धमुक्तं करोतु । तत् यदि न शक्यं तर्हि न्यूनातिन्यूनं मम पत्युः निमित्तम् उत्तमवस्त्राणां व्यवस्थां वा करोतु'' इति ।

गौर्याः वचनं श्रुत्वा दयामयः - ''नियमावल्यां यत् लिखितं तदनुसारमेव आचरन् अस्मि । इतःपरम् अस्मिन् विषये भवत्या वक्तव्यम् किमपि नास्ति । अहं किमपि कर्तुं न शक्नोमि'' इति उक्त्वा गौरीं प्रतिप्रेषितवान् । प्रतिदिनं कुलदीपः स्वस्य खेदं पत्न्याः पुरतः प्रकटयति स्म । एकदा सः पत्नीं - ''पतिः पत्नीं विक्रीतवान् इति पुराणेषु श्रूयते । किन्तु भवती तु स्वार्थबुद्ध्या प्रेरिता सती मम सहमतिं विना मां विक्रीतवती खलु । मां विक्रेतुं भवत्याः कः अधिकारः ? अहं ग्रामाधिकारिणः समीपं ज्ञात्वा सर्वं निवेदयिष्यामि । अन्यः मार्गः न दृश्यते एव'' इति अवदत् ।

गौरी चिन्तितवती - 'मम कारणतः पत्युः विषये अन्याय्यं भवत् अस्ति' इति । एतत् सा सोढुं न शक्ता । अतः सा ग्रामाधिकारिणः गृहं गत्वा - 'मम पत्युः साहाय्यं करोतु' इति वदन्ती प्रवृत्तं सर्वं निवेदितवती ।

गौर्याः वचनं श्रुत्वा ग्रामाधिकारी आश्चर्यचकितः अभवत् । झटिति सः दयामयम् आहूय गौर्या कृतं दोषारोपं श्रावितवान् ।

तदा दयामयः निर्भयम् उक्तवान् - ''मया पूर्वमेव सर्वे नियमाः स्पष्टरूपेण श्राविताः आसन् । तान् नियमान् अङ्गीकृत्य एव गौर्या अनुमतिपत्रे हस्ताङ्कनं कृतम् आसीत् । मम कारणतः एतस्य कुटुम्बस्य साहाय्यं भवत् अस्ति । इतरेषाम् अपेक्षया कुलदीपद्वारा अहम् अधिकं कार्यं कारयामि इति तु सत्यमेव । किन्तु अहं तस्मै वेतनमपि अधिकं ददामि । मया एवम् आचरितम् इत्यतः कुलदीपः मदिरासेवनादिकं त्यक्तवान् अस्ति । गृहव्ययानन्तरम् अपि प्रतिमासं किञ्चित् धनम् अवशिष्टं भवति । यदि अग्रे एवमेव अनुवर्तेत तर्हि केषुचित् मासेषु एव गौरी क्षेत्रमेकं क्रेतुं शक्नुयात्'' इति ।

तदा ग्रामाधिकारी - ''जीवने धनमेव सर्वस्वं नास्ति । जनाः आत्मगौरवेण जीवनं



कर्तुम् इच्छन्ति । कुलदीपः मदिरासेवनादिकं यत् करोति तेन भवतः का हानिः ? मदिरा-सेवनम् अपराधाय न खलु ?'' इति पृष्टवान् ।

तदा दयामयः - ''कुलदीपः चोरः अस्ति । तथापि भवतः दृष्ट्या सः दण्डार्हः न । अतः मया मध्ये प्रवेशः कृतः'' इति उक्तवान् ।

''कुलदीपः चोरः इति साधयतु तावत् । यदि सः अपराधी इति ज्ञायते तर्हि अहं स्वयं तं कारागृहं प्रेषयिष्यामि'' इति उक्तवान् ग्रामाधिकारी ।

तदा दयामयः - ''तर्हि श्रूयताम् । अस्माकं समाजे एकैकस्यापि जनस्य किमपि दायित्वं भवत्येव । मातापित्रोः पत्नीपुत्राणां च पोषण-करणं तस्मिन् एव कर्तव्ये अन्तर्भवति । यदि एतत् कर्तव्यं सः समीचीनतया निर्वहति तर्हि एव अवशिष्टं धनं सः इच्छानुसारं व्ययीकर्तुं शक्नोति । किन्तु कुलदीपः स्वकर्तव्यं न निरूढवान् । न केवलं तावत्, प्राप्तं वेतनमपि सः स्वनिमित्तमेव व्ययीकरोति स्म । अतः अहं तं चोरं भावयामि । गौरी तं चोरं मदधीनं कृतवती । अहं तम् उचिते बन्धने स्थापयित्वा योग्यप्रजां कर्तुं प्रयत्नं कृतवान् । अग्रे कदाचित् कुलदीपः धनिकः भवतु इत्येव मम अपेक्षा । तदर्थं मया योग्या व्यवस्था करणीया आसीत् । पत्नीपुत्राः बुभुक्षिताः सन्तः कष्टम् अनुभवन्ति चेदपि सः मद्य-पानादिविषये आसक्तः सन् सुखेन जीवनं यापयति । किम् एतत् उचितम् ? तस्य आत्म-गौरवस्य प्रश्नः एव अत्र उदेति । अलसस्य, स्वार्थिनः, दायित्वहीनस्य च दण्डनम् एवमेव करणीयम्'' इति क्रोधेन विवृतवान् ।

तदा ग्रामाधिकारी गौरी च वस्तुस्थितिं ज्ञातवन्तौ । गौरी दयामयं नमस्कुर्वती क्षमां याचितवती । कुलदीपः पत्न्याः द्वारा विषयं ज्ञात्वा - ''आम् । अहं चोरः एव । दयामयेन मद्विषये यत् आचरितं तत् सम्यक् एव आसीत् । अहं दण्डार्हः इत्यत्र नास्ति संशयः'' इति अवदत् ।

एतया घटनया कुलदीपे महन् परिवर्तनं जातम् । वर्षाभ्यन्तरे दयामयः तस्मै उत्तम-वस्त्राणि दत्त्वा तं गृहं प्रेषितवान् । अनन्तरं कुलदीपः दुर्व्यसनेभ्यः दूरे एव अतिष्ठत् ।







*प्रियमित्राणि,*

चन्दमामापरिवारः बालेभ्यः एतां नवम्बरीयसञ्चिकां विशेषाङ्कत्वेन अर्पयति सामोदम् ।

एतस्मिन् अङ्के भवद्भिः बालैः लिखिताः एव कथाः प्रकाशिताः । एताः भारतस्य विभिन्नभागेभ्यः स्थितैः बालैः प्रेषिताः । सर्जनात्मक-लेखन-चित्रस्पर्धायाः उत्तररूपेण प्रेषिताः एताः ।

चित्रस्पर्धार्थं बालकलाकारैः सज्जीकृतैः चित्रैः अत्रत्याः कथाः विभूषिताः सन्ति । एतस्यां स्पर्धायां भागं गृहीतवद्भ्यः बालकलाकारेभ्यः कृतज्ञताः समर्पयति चन्दमामापरिवारः । 'एषः प्रयत्नः एवम् एव अनुवर्तताम्' इति आशंसति च ।

यैः कथास्पर्धासु चित्रस्पर्धासु च विजयं प्राप्तुं न शक्तं तैः खेदं प्राप्तव्यः नास्ति । स्पर्धार्थं प्राप्ताः सर्वाः कथा-चित्रादयः उत्तमाः आसन् । अतः प्रथमादिस्थानार्थं कृतेः चयनम् एव कष्टाय जातम् । आगामिस्पर्धायां भवन्तः एव विजयिनः भवितुम् अर्हन्ति अपि ।

यैः परीक्षादिकारणतः अन्यकारणतः वा स्पर्धायां भागं ग्रहीतुं न शक्तं तैः अपि खेदः प्राप्तव्यः नास्ति । तादृशानां निमित्तम् अग्रे विभिन्नाः अवसराः कल्पयिष्यन्ते । एतस्मिन् विशेषाङ्के यथा बालानां भवतां कथाः तथैव दीपावलीपर्वसम्बद्धाः अनेकाः कथाः अपि प्रकाश्यमानाः सन्ति । एषः मासः पर्वबहुलः । अतः वयं चिन्तितवन्तः यत् पर्वणां विषये कथादिज्ञापनं वरम् इति । ततः भवतां ज्ञानं वर्धते खलु ? अग्रिमे अवसरे भवन्तः यदा स्फोटकानि स्फोटयन्ति तदा दीपावली-सम्बद्धाः कथाः स्मरन्तु इति अस्माकम् उद्देशः ।



भवन्तः एतस्मिन् अङ्के प्रकाशिताः कथालेखादिकं पठित्वा आनन्दम् अनुभवन्तु । अस्माकं पूर्णः विश्वासः अस्ति यत् एतासां कथादीनां सङ्ग्रहतः अस्माभिः यथा आनन्दः प्राप्तः तथैव भवन्तः अपि तासां पठनतः आनन्दं प्राप्स्यन्ति इति ।

भवदीयः सस्नेहः सम्पादकः

**विश्वम्**




# सुदिनं खलु एतत् !!

**- नित्या त्रिपुरनेनी,** *यु. एस्. ए.*

पूर्वं नीनानामिका बालिका आसीत् । तस्याः ग्रामस्य नाम गङ्गापुरम् इति । स च ग्रामः हिमालयस्य उपत्यकायाम् आसीत् ।

नीनायाः भगिनी श्वेता । ताभ्याम् एव कदाचित् सर्वाणि गृहकार्याणि करणीयानि अभवन्, यतः तयोः माता तीव्रम् अस्वस्था अभवत् । अस्वस्था सा शय्यायां शयाना एव पुस्तकं पठन्ती, सङ्गीतं शृण्वती, बालिकयोः गृहपाठं परिशीलयन्ती कालं यापयति स्म । नियतरूपेण औषधं सेवमाना सा कदाचित् वैद्यसमीपं गच्छति स्म ।

एकदा नीना 'बेरी'फलानि आनेतुम् अरण्यं गतवती । यदा सा गुल्मानां मध्ये स्थित्वा फलानि सङ्गृह्णती आसीत् तदा तया समीपस्थात् वृक्षकोटरात् निर्गच्छन् प्रकाशः दृष्टः । सा कुतूहलेन वृक्षसमीपं गत्वा कोटरस्थं वस्तु स्वीकृतवती । तच्च आसीत् सुवर्णपदकोपेतः हारः । पदकस्य उपरि पतितः सूर्यप्रकाशः प्रतिफलितः सन् नीनायाः दृष्टिगोचरतां गतः आसीत् । सा पेटिकायमानस्य पदकस्य आवरणम् उन्नीय दृष्टवती । तस्य अन्तः किमपि न आसीत् । सा जागरूकतया आवरणं यथापूर्वं स्थापयित्वा पदकं निचोलस्य कोषे स्थापयित्वा गृहं प्रतिगतवती ।

भोजनपीठस्य उपरि द्रोणपरिमितानि बेरीफलानि स्थापितानि तया । तच्च श्वेतायाः सप्तमं जन्मदिनम् आसीत् । अतः पाककार्यादीनि नीनायाः प्रतीक्षां कुर्वन्ति स्म । कार्यादिषु नितरां व्यग्रा सा वृक्षकोटरे प्राप्तं सुवर्णपदकं सर्वथा विस्मृतवती एव ।

भोजनसमयः यदा आसन्नः तदा श्वेता सन्तोषातिशयं प्राप्तवती, नीना च श्रान्त्यतिशयम् । किन्तु सर्वे यदा पाकस्य रुचिं प्रशंसितवन्तः तदा नीनायाः श्रान्तिः अपि सन्तोष-रूपेण परिवृत्ता ।

भोजनोत्तरम् उपायनपरिशीलनसमयः सम्प्राप्तः । श्वेता नक्षत्रचित्रयुक्तेन कागदेन आवृत्तं बन्धम् आदौ उद्घाटितवती । तस्य अन्तः आसीत् 'अञ्जली'-पाञ्चालिका । सा अपूर्वा महार्घा च आसीत् । मात्रा उपायनीकृतम् आसीत् सा । वित्तकोषं गत्वा सञ्चितं धनम् आनीय तां क्रीतवती आसीत् माता ।

''अम्ब ! अनुगृहीताऽस्मि । किन्तु अम्ब ! एतस्य मूल्यम् अधिकं स्यात् एव । अस्वस्था भवती किमर्थम् एतादृशस्य आनयनस्य श्रमम् ऊढवती ?'' इति पृष्टवती श्वेता ।

''मम वत्सायै कृतः अल्पः अयं श्रमः वस्तुतः न क्लेशाय'' इति श्वेतायाः शिरः प्रीत्या आमृशन्ती उक्तवती माता ।

अपरः उपायनबन्धः पाटलपुष्पचित्रैः अलङ्कृतेन कागदेन आवृतः आसीत् । पाटलपुष्पं श्वेतायाः विशेषतः प्रियम् । कागदम् अच्छिन्दती जागरूकतया बन्धम् उद्घाटितवती श्वेता । तस्य अन्तः आसीत् सुन्दरी सङ्गीत-पेटिका, सुन्दरैः चित्र-विन्यासैः विभूषिता । तत् च उपायनीकृतम् आसीत् नीनया ।




''नीने ! प्रीताऽस्मि नितराम् । एतत् जागरूकतया रक्षिष्यामि'' इति उक्तवती श्वेता ।

नीना मन्दहासपूर्वम् उक्तवती - ''अत्र पश्यतु । कुञ्चिका अपि अस्ति एतस्याः । यदा वादनीयं तदा कुञ्चिकया प्रवर्त्य अपेक्षितः रागः श्रोतुं शक्यः । उपयोगः यदा न क्रियते तदा कीलितं चेत् अन्यः कोऽपि एतस्य उपयोगं कर्तुं न अर्हति'' इति ।

''उत्तमा व्यवस्था एषा'' - सन्तोषेण उक्तवती श्वेता ।

''एतदुभयं केन वा उपायनीकृतं स्यात् ?'' इति कुतूहलेन पृष्टवती नीना, बन्धद्वयं दर्शयन्ती ।

एकः बन्धः उपायनीकृतः आसीत् पितामहेन, अपरश्च उपायनीकृतः आसीत् पित्रा । श्वेता बन्धम् उद्घाटितवती । तत्र आसीत् सुन्दरं हृदयाकारकं पदकम् । नीनया यादृशं प्राप्तं तादृशम् एव आसीत् तत् । तस्य अन्तः एकं भावचित्रम् आसीत्, यत्र च मात्रा, पित्रा, नीनया च सह सा स्थिता आसीत् । सा पदकोपेतं हारं धृतवती । आनन्देन सकृत् करताडनं कृतवती च । पदकधारणतः तस्याः शोभा प्रवृद्धा आसीत् ।

अपरः बन्धः लिलीपुष्पचित्रैः अलङ्कृतः आसीत् । 'लिली'-पुष्पाणि अपि श्वेतायाः प्रियाणि एव । तस्य अन्तः काचकमयः डाल्फिनः आसीत् । डाल्फिनः अपि श्वेतायाः प्रियः एव । डाल्फिनं श्वेता मात्रे दत्तवती । माता तं नीत्वा श्वेतायाः शयनप्रकोष्ठे स्थापितवती ।

शयनसमयः आसन्नः । नीना श्वेता च शयनार्थं शयनप्रकोष्ठं गतवत्यौ । नीना आत्मना प्राप्तं पदकम् आभरणपेटिकायां स्थापयित्वा स्यूताकारिकां शय्यां प्रविष्टवती ।

''एतत् निश्चयेन सुदिनं खलु नीने ?'' - श्वेता पृष्टवती ।

''आम् । एतत् सुदिनम् एव । अस्तु, शयनं करवाव'' - नीनया उक्तम् ।

''भवतु, शुभरात्रिः ।''

''शुभरात्रिः ।''

शयाना एव नीना चिन्तितवती - 'सत्यम्, एतत् सुदिनम् एव । अतः एव मया वृक्षकोटरे सुवर्णपदकोपेतः हारः प्राप्तः । सर्वं भगवतः कृपा' इति ।

# सहना

- *शीतला डि. वडगवे*, महाराष्ट्र

अनिलः सुनीलः च निर्धनौ बालौ । कस्यांश्चित् शालायां तौ पठतः स्म । निःशुल्कछात्रावासे तयोः वासः । यद्यपि तौ बालौ निर्धनौ, तथापि तौ विद्यावन्तौ भूत्वा स्वावलम्बिनौ भवितुम् इच्छतः स्म । अतः तौ आंशिकरूपेण आपणादिषु उद्योगम् अपि कुरुतः स्म । ततः प्राप्तेन धनेन एव विद्यालयस्य शुल्कं पूर्यते स्म ताभ्याम् । किन्तु तत् धनं यदा पर्याप्तं न जातं तदा तौ दूरबन्धुं पितृव्यं स्मृतवन्तौ । सः पितृव्यः महाधनिकः । तस्मै पत्रं विलिख्य तौ परिस्थितिं विवृत्य - 'कृपया पञ्चशतं रूप्यकाणि प्रेषयतु' इति निवेदितवन्तौ । ततः प्राप्तेन धनेन शालाशुल्कं पूरयित्वा विद्याभ्यासः अनुवर्तनीयः इति तयोः विचारः ।




पत्रस्य प्राप्तेः समनन्तरमेव शतरूप्यकाणां धनादेशं प्रेषितवान् पितृव्यः ।

यावत् निरीक्षितं ततोऽपि न्यूनं धनं प्राप्तम् इत्यतः सुनीलः कुपितः । सः अनिलम् अवदत् - ''अस्माकं पितृव्यः शताधिकरूप्यकाणि प्रतिदिनम् इन्धनतैलनिमित्तं व्ययीकरोति । किन्तु आवयोः साहाय्यकरणप्रस्तावः यदा आगतः तदा कृपणतां प्रदर्शितवान् सः । किम् एतेन अल्पधनेन ? एतत् प्रत्यर्पयाम वयम् । नो चेत् तेन कृतस्य साहाय्यार्थम् आजीवनं तस्य अधमर्णता अङ्गीकरणीया भवेत्'' इति ।

किन्तु तस्य अग्रजः अनिलः शीघ्रकोपी न । सः सुनीलम् उक्तवान् - ''श्वः प्रातःकाले निर्णयं करवाव'' इति ।

किन्तु सायङ्काले सुनीलस्य कोपः उपशान्तः । 'अविचार्य निर्णयः अनुचितः' इति तेन अवगतम् ।

परेद्यवि प्रातः अनिलः सुनीलम् अवदत् - ''धनं प्रत्यर्पणीयम् इति ह्यः भवता यत् चिन्तितं तत् दोषयुक्तम् । अस्माकं पितृव्यः दयालुः । सामान्यस्य समपत्रस्य प्राप्त्या को वा शतं रूप्यकाणि प्रेषयेत् ? बहुभ्यः वर्षेभ्यः तं न दृष्टवन्तौ एव आवाम् । तथापि सः कष्टकाले एतावत् वा साहाय्यं कृतवान् खलु ! शतं रूप्यकाणि न न्यूनानि ! तावत् सम्पादनीयं चेत् अनेके सप्ताहाः आवश्यकाः भवेयुः । यदि आवाम् एतस्य धनस्य सदुपयोगं कुर्वः तर्हि पितृव्यः निश्चयेन भविष्ये अपि साहाय्यं कुर्यात्'' इति ।

अग्रजस्य वचनं सुनीलेन अपि अङ्गीकृतम् । तेन धनेन तौ कतिचन पुस्तकानि क्रीतवन्तौ । शुल्कमपि पूरितवन्तौ । श्रद्धया पठित्वा परीक्षायाम् उत्तमान् अङ्कान् प्राप्तवन्तौ च ।

अनिलः उभयोः अङ्कपट्टिकां प्रगतिपत्रं च पितृव्याय प्रेषयित्वा धन्यवादान् समर्पितवान् । पत्रं दृष्ट्वा पितृव्यः अत्यन्तं हृष्टः । 'भ्रातृव्यौ न केवलं धनस्य सदुपयोगं कृतवन्तौ, अपि तु मम विषये कृतज्ञौ अपि स्तः' इति विचिन्त्य सः पुनरपि तयोः कृते त्रिसहस्रं रूप्यकाणि प्रेषयित्वा - 'अग्रे अपि विद्याभ्यासार्थं साहाय्यं करिष्यामि' इति सूचितवान् ।

द्वौ अपि सहोदरौ परिश्रमेण विद्याभ्यासं कृतवन्तौ । ततः अनिलः वैद्यः अभवत् । सुनीलः च तन्त्रज्ञः ।

# बुद्धिमान् सुमित्रः



- *जि. के. प्रसादः*, *आ. प्र.*




सुनन्दः सुशीलदेशस्य राजा । सुशीलराज्यं लघु । अतः प्रतिवेशिनः देशाः लघुकारणस्य निमित्तम् अपि युद्धम् उद्घोषयन्ति स्म । सुशीलदेशस्य सम्पत्तिं ते स्वायत्तीकुर्वन्ति स्म । कदाचित् सुशीलदेशम् एव स्वायत्तीकर्तुम् अपि प्रयत्नः प्रचलति स्म ।

पराक्रमी सुनन्दः त्रिवारं शत्रूणाम् आक्रमणं विफलीकृत्य देशस्य स्वातन्त्र्यं रक्षितवान् । किन्तु निरन्तरं प्रवृत्तस्य युद्धस्य कारणतः देशस्य आर्थिकस्थितिः नितरां दुर्बला जाता । देशे आहाराभावः, मूल्यवृद्धिः च उत्पन्नः । एतस्याः समस्यायाः परिहारः कथम् इति राज्ञा न ज्ञातम् । कदाचित् वृद्धः अनुभवी मन्त्री तम् अवदत् - ''महाराज ! यदा भवतः पितुः शासनं प्रचलति स्म तदा कौण्डिन्यदेशस्य राजा आक्रमणं कृत्वा देशस्य प्रभूतां सम्पत्तिं वशीकृत्य गतवान् । किन्तु तां सम्पत्तिं सः स्वदेशं नेतुं न शक्तवान् । अतः सः उत्तरभागे स्थिते अरण्ये गुहासु तां सम्पत्तिं स्थापितवान् । सा च अद्यापि तत्रैव अस्ति । यदि सः निधिः अस्माभिः प्राप्येत तर्हि अस्माकं देशस्य अर्थस्थितिः उत्तमा स्यात्'' इति ।

''निधिप्राप्तिप्रयत्नः उत्तमः एव । किन्तु तं निधिम् आनेतुं गतः कोऽपि अद्यावधि न प्रत्यागतः इति भवान् अपि जानीयात् । अतः निधिप्राप्तिः क्लेशाय एव'' इति अवदत् राजा ।

''आम् । निधिप्राप्तौ कष्टम् अस्ति, किन्तु असम्भवता तु नास्ति । अतः वयं निधिविषयम् उद्घोषयाम । कोऽपि उत्साही युवकः एतत् स्पर्धाह्वानं स्वीकुर्यात् । यः निधिम् आनेष्यति सः एव युवराजः भविष्यति इत्यपि उद्घोषयाम । एतस्मात् निस्सन्तानेन भवता उत्तमः उत्तराधिकारी अपि प्राप्येत'' इति असूचयत् मन्त्री ।

राज्ञे एषः प्रस्तावः अरोचत । अतः तदनुगुणम् उद्घोषणं कारितवान् सः ।

ततः सप्ताहानन्तरं सुमित्रः नाम कश्चन तरुणः राजास्थानम् आगत्य अवदत् - ''अहं निधिं प्राप्तुं प्रयत्नं करिष्यामि । तदर्थं मह्यम् आसन्नप्रसवाः दश अश्वाः आवश्यक्यः'' इति ।

राजा तस्मै आसन्नप्रसवाः दश अश्वाः दापितवान् । सुमित्रः कानिचन दिनानि ताभ्यः उत्तमाहारं दत्तवान् । यदा तासां प्रसवः आसन्नः तदा सः ताः अरण्यं नीतवान् । गुहसमीपे ताः प्रसूतवत्यः । तासां शिशूनां योग्यरक्षणार्थं सैनिकान् नियोज्य अग्निकाष्ठं गृहीत्वा ताभिः सह गुहां प्रविष्टवान् सुमित्रः ।

निधिम् अश्वानाम् उपरि आरोप्य अपायं विना प्रत्यागतवन्तं सुमित्रं मन्त्री पृष्टवान् - ''अद्यावधि गुहां प्रविष्टः कोऽपि न प्रत्यागतः । एवं स्थिते भवान् कथं निरापदं प्रत्यागतः ?'' इति ।

तदा सुमित्रः अवदत् - ''अश्वाः घ्राणशक्तिद्वारा सुदूरस्थम् अपि स्वस्य अपत्यं जानन्ति इति मया ज्येष्ठानां मुखात् श्रुतम् आसीत् । अतः एव मया आसन्नप्रसवाः दश अश्वाः प्रार्थिताः । मम उपायः फलितः । प्रत्यागमनसमये ताः मम उपकारिकाः जाताः ।

गुहायाः अन्तः तत्र तत्र मानवानाम् अस्थि-पञ्जराणि मया दृष्टानि । निधिम् आनेतुं गतानां, बहिर्गमनमार्गम् अज्ञातवताम् अस्थिपञ्जराणि तानि । प्रवेशैकोत्सुकाः ते प्रत्यागमनमार्गं न ज्ञातवन्तः । अतः एव ते तत्रैव प्राणैः वियुक्ताः जाताः ।

मया कष्टेन एव निधिपर्यन्तं गतम् । सुवर्णाभरणादीनां राशिः एव तत्र आसीत् । अग्निकाष्ठस्य प्रकाशस्य साहाय्येन मया निधिः स्यूतेषु पूरितः, अश्वानाम् उपरि स्थापितः च । किन्तु तावता दौर्भाग्यवशात् अग्निकाष्ठस्थः अग्निः निर्विण्णः । सर्वत्र अन्धकारः प्रसृतः । मया एतादृशी विपत्तिः ऊहिता आसीत् एव । अतः अहं धैर्यच्युतः न जातः । अहम् एकाम् अश्वाम् आरुह्य सर्वाः बहिर्गमनाज्ञया चोदितवान् । ताः गन्धद्वारा जानन्ति स्म यत् स्वापत्यानि कुत्र सन्ति [illegible] । अतः ताः मां बहिः आनीतवत्यः । एवं मम कार्यं सिद्धम् । देशस्यपि हितं सिद्धम्'' इति ।

राजा तं विशेषतः सत्कृत्य घोषणानुसारं युवराजपदे प्रतिष्ठापितवान् । सर्वे तस्य बुद्धिमत्तां साहसप्रवृत्तिं च बहुधा प्रशंसितवन्तः ।

एतस्मात् सुशीलराज्यस्य अर्थक्लेशः अपगतः । प्रजानां च सुखं जातम् ।



# वास्तविकः आनन्दः

*- अनुभवमौर्यः, उ. प्र.*

राजीवः अद्य सन्तोषेण अस्ति, यतः दीपावली आसन्ना अस्ति । सः प्रतिवर्षं दीपावलीकाले स्फोटकापणं चालयति । एतस्मिन् वर्षे अपि सः आपणं स्थापितवान् अस्ति । वाणिज्यम् अपि उत्तमतया प्रचलत् अस्ति तत्र । सविनयः व्यवहारः, उत्तमवस्तु-प्राप्तिः च यत्र भवति तत्र वाणिज्यं सम्यक् प्रचलेत् एव खलु !

गते वर्षे तेन अष्टशत(८००-००) रूप्यकाणां लाभः सम्पादितः आसीत् । एतेन धनेन सः कानिचन पाठ्यपुस्तकानि क्रीत्वा भगिन्याः शुल्कम् अपि दत्तवान् । अविशिष्टस्य कञ्चित् भागं वित्तकोषे स्थापयित्वा सः गृह-व्ययार्थं मात्रे अपि किञ्चित् धनं दत्तवान् आसीत् । एतस्मात् राजीवस्य मातापितरौ सन्तुष्टौ आस्ताम् । ततः द्विगुणितोत्साहः सः एतस्मिन् वर्षे आपणव्यवस्थार्थम् उद्युक्तः आसीत् ।

षट्सप्तमासेभ्यः पूर्वं राजीवस्य पिता तीव्रतया अस्वस्थः आसीत् । तदा गृहव्यवस्थानिर्वहणार्थं तेन कृषिभूमिः विक्रीता आसीत् । एतस्मात् राजीवस्य गृहस्य अर्थस्थितिः दुर्बला जाता । गृहस्य दुर्बलस्थितेः कारणतः राजीवस्य अध्ययनव्यवस्था बाधिता अभवत् । अतः सः अनन्यगतिकतया गृहे पाठनम् आरब्धवान् ।

तस्य पाठनकौशलस्य, परिश्रमस्य च कारणतः बहवः बालाः तस्य समीपम् आगताः अध्ययनार्थम् । तस्मात् सः प्रतिमासं ९४० - ०० रूप्यकाणि सम्पादयितुं समर्थः जातः । एतस्मात् तदीय-गृहस्य अर्थस्थितिः उत्तमा जाता । तस्य पिता उत्तमचिकित्सां प्राप्तुं शक्तवान् । द्वित्रेषु मासेषु सः ऋणं प्रत्यर्पयितुम् अपि शक्तवान् ।




Agni Chemburkar, Maharashtra

गृहस्य अर्थक्लेशः अपगतः इत्यतः राजीवः उत्साहेन एव एतस्मिन् वर्षे दीपावलीनिमित्तं विशालम् आपणं व्यवस्थापयितुं शक्तवान् । आपणारम्भदिने एव सार्धपञ्चशताधिक-रूप्यकाणां वाणिज्यं कृतवान् । अनन्तरदिने अपि तस्य आपणे क्रेतॄणां बाहुल्यम् आसीत् । एतस्मात् अधिकपरिश्रमः करणीयः अभवत् तेन, तथापि तावता एव प्रमाणेन लाभांशः अपि प्राप्तः ।

वाणिज्यतः प्राप्तं धनं स्वीकृत्य वेगेन गृहं गच्छन् आसीत् राजीवः । मध्येमार्गं सः

कस्माच्चित् गृहात् निर्गच्छन्तं रोदनध्वनिं श्रुतवान् । एतस्मात् तस्य गमनवेगः स्थगितः । कस्मिंश्चित् गृहे त्रयः बालकाः मातरं सानुरोधं रोदनपुरस्सरम् अभियाचन्तः आसन् यत् दीपावलीनिमित्तं स्फोटकानि मधुरखाद्यानि च अपेक्षितानि इति । 'प्रायः एतस्य गृहस्य आर्थिकस्थितिः उत्तमा न स्यात् । यदि मम गृहे एतादृशी स्थितिः स्यात् तर्हि किम् अहं तूष्णीं तिष्ठेयम् ? अन्यच्च, एते बालाः अल्पवयस्काः । किम् अहम् एतेषां साहाय्यं कर्तुं न शक्नुयाम् ?' इति सः अचिन्तयत् । एवं चिन्तयित्वा सः गम्भीरः भावुकः च जातः । सः पितरं स्वस्य चिन्तनम् उक्तवान् । पिता तदीयं चिन्तनं ससन्तोषं प्रोत्साहितवान्, साहाय्यदानार्थं सम्मतिं सूचितवान् च ।

प्रातः आपणं गतः राजीवः आदिनं कार्यव्यग्रः एव आसीत् । यतः तस्मिन् दिने ग्राहकाः आधिक्येन आगताः आसन् । सायं सः आपणं पिधाय स्यूते स्फोटकानि, कानिचन मधुराणि च स्थापयित्वा तत् गृहं गतवान्, यत्र च तेन रुदन्तः बालाः दृष्टाः । तत् गृहं गत्वा वृद्धायाः चरणौ स्पृष्ट्वा तेन स्यूतः तस्यै दत्तः । सा आश्चर्येण पृष्टवती - ''वत्स ! किम् एतत्सर्वम् ? कः भवान् ?'' इति ।

तदा राजीवः अवदत् - ''अम्ब ! ह्यः एतेन मार्गेण गमनसमये मया अत्र रुदन्तः बालाः दृष्टाः । तेषां दुःखं द्रष्टुं मया न शक्तम् । अतः एतत् सर्वम् आनीतं मया । भवती मां 'वत्स !' इति सम्बोधितवती अस्ति । किं मातुः साहाय्यं कर्तुं पुत्रस्य अधिकारः न भवति ? मम अल्पं साहाय्यं कृपया न निराकरणीयं भवत्या । यदि मम स्थाने भवती स्यात्, अहं च यदि निर्धनः स्यां,


Agni Chemburkar, Maharashtra

तर्हि भवती किम् अकरिष्यत् ?'' इति ।

तदा वृद्धा आनन्देन - ''भवादृशं पुत्रं प्राप्तवती का वा माता सन्तोषं न अनुभवेत् ? भवान् दयालुः गुणी च । दीर्घायुष्मान् भव'' इति आशीर्वादं कृतवती ।

अत्रान्तरे तस्याः त्रयः बालाः अपि तत्र आगताः । स्फोटकानि मधुरखाद्यानि च प्राप्य ते नितरां सन्तुष्टाः अभवन् । तेषां मुखे हासः उत्पन्नः । तत् दृष्टवतः राजीवस्य महान् आनन्दः जातः । एतम् आनन्दं मनसि एव पुनः पुनः आकलयन्, स्वकृत्यस्य सार्थकतां चिन्तयन्, सः स्वगृहं प्रति प्रस्थितवान् ।



# लोकस्य रीतिः एषा

- *मो. शिराझः, विशाखपत्तनम्*

पूर्वं सर्वे प्राणिनः यदा सम्भाषणसमर्थाः आसन् तदा कस्मिंश्चित् ग्रामे कश्चन बालकः वसति स्म । पार्श्वग्रामे स्थितं गुरुकुलं प्रति सः ग्रामपार्श्वस्थम् अरण्यम् अतिक्रम्य गच्छति स्म । एकदा सः एकाकी यदा प्रत्यागच्छन् आसीत् तदा समीपस्थात् सरोवरात् कस्यचित् मकरस्य करुणक्रन्दनं श्रुतम् । "साहाय्यं क्रियताम्" इति उच्चैः वदति स्म सः ।

तस्य समीपं गत्वा बालकः अपृच्छत् - "किं कष्टं भवतः ?" इति ।

"कूटयन्त्रेण अहं निगृहीतः । कृपया मां रक्षतु" - मकरः अवदत् ।

"यदि अहं भवत्समीपम् आगच्छेयं तर्हि भवान् मां मारयेत्" इति सन्देहं प्रकाशितवान् बालः ।

"न सर्वथा । मम वचने विश्वसितु । मत्समीपम् आगच्छतु निर्भयम्" इति अवदत् मकरः ।

बालकः मकरस्य समीपं गतवान् । तदा मकरः तं दन्तैः अगृह्णात् ।

"उपकारबुद्धिं प्रदर्शितवतः मम विषये एषा कृतघ्नता सर्वथा अनुचिता" इति अवदत् बालः ।

"एषा कृतघ्नता स्यात् नाम । किन्तु लोकस्य रीतिः एव एषा" इति अवदत् मकरः ।

"कृतघ्नः भवान् एकः एव, न तु समग्रः लोकः" इति अवदत् बालः ।

"लोकः एव एतादृशः इत्यत्र नास्ति सन्देहः । भवतः इतोऽपि संशयः खलु ? अतः आगतान् त्रीन् पृच्छामि । ते अपि यदि मम कथनम् एव पोषयन्ति तर्हि अहं भवन्तं खादिष्यामि एव" इति अवदत् मकरः ।

अल्पे एव काले तत्र कश्चन गर्दभः आगतः । सः सर्वं श्रुत्वा अवदत् - "यावत् अहं कार्यसमर्थः आसं तावत् मम स्वामी मया कार्यं कारितवान् । वृद्धं दुर्बलं तु मां गृहात् निष्कासितवान् सः । अतः लोकः कृतघ्नः एव" इति ।

अनन्तरं कश्चन अश्वः आगतः । सः अपि गर्दभस्य वचनम् एव पोषितवान् ।

ततः कश्चन शशः तत्र आगतः । सर्वं श्रुत्वा शशः अवदत् - "यावत् प्रवृत्तं समग्रम् अहं प्रत्यक्षं न पश्यामि तावत् किमपि निर्णेतुं न शक्नोमि । भवान् कुत्र आसीत् आदौ, बालश्च कुत्र आसीत् ? तत् सर्वप्रथमं द्रष्टव्यं मया" इति ।

मकरः वस्तुस्थितिं दर्शयितुं बालम् अत्यजत् । बालः तीरम् आगतः । तं शशः अवदत् - "भवद्ग्रामीणाः सर्वे मकरमांसं विशेषतः इच्छन्ति खलु ? अतः सर्वान् अत्र आनयतु" इति ।



Pritam Das, West Bengal

बालः धावन् ग्रामं प्राप्य जनैः सह प्रत्यागतः । जनाः आत्मना सह मृगयाशुनकान् अपि आनीतवन्तः आसन् । ते शुनकाः शशं ग्रहीतुं तम् अनुसृत्य धावितवन्तः । एतत् दृष्ट्वा बालकः अचिन्तयत् - 'मकरः यत् अवदत् तत् युक्तम् एव । लोकस्य रीतिः एव एषा' इति ।




# देशभक्तः गङ्गः

- ***फणिश्यामः***, *आ. प्र.*

गङ्गः पाण्ड्यदेशस्य प्रसिद्धः लुण्ठाकः । तस्य नाम्नः श्रवणात् एव बालाः भीताः भवन्ति स्म । तस्य बन्धनार्थं बहवः प्रयत्नाः प्रवृत्ताः । किन्तु ते सर्वे व्यर्थाः ।

एकदा गङ्गः नगरस्य कस्यचित् प्रमुखवणिजः गृहं लुण्ठयित्वा यदा गच्छन् आसीत् तदा सैनिकाः तं दृष्टवन्तः । किन्तु गङ्गः अश्वम् आरुह्य धावितवान् । राजधानीसीमाम् अतिक्रम्य सः अश्वात् अवतीर्य एकस्मिन् मन्दिरे निलीय स्थितवान् ।

अल्पे एव काले पाण्ड्यदेशस्य सेनाधिपतिः उभाभ्यां सैनिकाभ्यां सह तत्र आगतवान् । कोङ्कणदेशस्य गुप्तचराः ततः पूर्वम् एव तत्र उपस्थिताः आसन् ।



पाण्ड्य-कोङ्कणदेशयोः वैरम् आ बहोः कालात् अनुवर्तमानम् आसीत् ।

गङ्गः शिथिले देवालये निलीय स्थितवान् इति पाण्ड्यदेशस्य सैनिकाः, कोङ्कणदेशस्य गुप्तचराः वा न जानन्ति स्म ।

पाण्ड्यदेशस्य सेनापतिः गुप्तचरेभ्यः एकं पत्रं दत्त्वा उक्तवान् - ''एतत् भवन्तः स्वराजाय यच्छन्तु । पाण्ड्यदेशे महाराजस्य सूर्यसेनस्य मरणस्य अनन्तरं तत्पुत्रः चन्द्रसेनः राजा जातः अस्ति । सः युद्धतन्त्रादिषु सर्वथा अनभिज्ञः । पाण्ड्यदेशस्य सैन्यविवरणादिकम् एतस्मिन् पत्रे अस्ति । इदानीं पाण्ड्यदेशस्य उपरि आक्रमणं कृतं चेत् जयः सुलभः'' इति ।

निलीय स्थितः गङ्गः एतानि वचनानि श्रुत्वा आश्चर्यचकितः । सः विद्युद्वेगेन बहिः आगत्य तत् पत्रं बलात्



वशीकृत्य अश्वम् आरुह्य वेगेन राजधानीं प्रति प्रस्थितवान् ।

गुप्तचराः सैनिकौ च तम् अनुसृतवन्तः । ते गङ्गम् उद्दिश्य खड्गान् क्षिप्तवन्तः । एकः खड्गः गङ्गं व्रणितम् अकरोत् । तस्य शरीरात् रक्तधारा निर्गता । तथापि गङ्गः हताशः न जातः । सः वेगेन गच्छन् राजधानीं प्राप्य कागदं राज्ञे समर्पितवान्, राजानं समग्रं विवरणम् उक्तवान् च ।

राज्ञः आदेशानुसारं सैनिकाः गुप्तचरान्, सेनापतिं, सैनिकौ च बद्ध्वा कारागारे स्थापितवन्तः ।

ततः राज्ञः मनसि सन्देहः उत्पन्नः - 'गङ्गः प्राणान् अपि पणीकृत्य देशरक्षार्थं कार्यं कृतवान् । किन्तु सः लुण्ठाकः अपि । एवं स्थिते सः दण्डनीयः, उत पुरस्करणीयः ?' इति ।

एतस्य धर्मसङ्कटस्य कारणतः तेन समग्रायां रात्रौ निद्रा न प्राप्ता । अशान्तमनस्कः सः प्रकोष्ठे इतस्ततः अटितवान् । तदवसरे तेन एकः ताल-पत्रबन्धः प्राप्तः । सः तम् उद्घाट्य पठितवान् । मरणात् पूर्वं तदीयः पिता शासनसिद्धान्तान् पुत्रनिमित्तं लिखितवान् आसीत् तत्र ।

तस्य पत्रबन्धस्य प्रथमे एव पृष्ठे लिखितम् आसीत् - "देशभक्तितः अपि श्रेष्ठः गुणः कोऽपि नास्ति" इति । एतस्य पठनात् राजा इतिकर्तव्यतां ज्ञातवान् । ततः तेन सुखेन निद्रा कृता ।

अनन्तरदिने राजा पूर्णायां सभायां देशद्रोहिणां मरणदण्डनं विहितवान् । परिस्थितिकारणतः लुण्ठाकत्वम् अवलम्बितवते गङ्गाय तेन क्षमा दत्ता । शत्रुभ्यः देशं रक्षितवते तस्मै आस्थाने उद्योगः अपि तेन दत्तः ।



# राज्ञः करवस्त्रम्

- **सायिबाला मोहन्ती,** *ओरिस्सा*

श्रीवर्धनः नाम कश्चित् राजा आसीत् । सः मृगयाप्रियः । कदाचित् सः मृगयार्थम् अरण्यं गतवान् । तत्रैव बहुदिनानि स्थित्वा मृगयां कृतवान् । तत्काले एव कदाचित् सः मार्गभ्रष्टः अभवत् । अरण्ये सञ्चरन् सः अन्यराज्यस्य सीमां प्रविष्टवान् । पर्वतारोहणादिकं कृतम् इत्यतः श्रान्तं तं महती पिपासा बाधते स्म ।

Sarthak Sobhana Satpathy, Orissa

पिपासानिवारणार्थं कूपः, सरः वा अन्विषन् सः अग्रे गतवान् । बहुकालस्य अन्वेषणस्य अनन्तरं सः कस्यचित् उत्सस्य समीपम् आगतवान् । ततः किञ्चित् जलं स्वीकृत्य यदा पानम् आरब्धं तदा एव कस्यचित् हासः श्रुतः । ध्वनेः मूलम् अन्विष्यन् सः परितः दृष्टिं प्रसारितवान् । अनतिदूरे एव काश्चन युवतयः नद्यां स्नानं कुर्वन्ति स्म । तासु एका युवतिः अत्यन्तं सुन्दरी आसीत् । किञ्चित् सम्भाषणानन्तरं श्रीवर्धनेन ज्ञातं यत् सा तस्य देशस्य राजकुमारी इति । किन्तु श्रीवर्धनः स्वस्य वास्तविकं परिचयं गोपितवान् । यदा ताः जलात् बहिः आगतवत्यः तदा राजा राजकुमार्या सह विवाहस्य इच्छां प्रकटितवान् । राजकुमारी लज्जया - ''भवान् मम पित्रा सह वार्तालापं करोतु । मम विषये यथायोग्यं निर्णयकरणे सः एव समर्थः'' इति अवदत् ।

अतः श्रीवर्धनः तस्याः राजकुमार्याः देशस्य राजधानीं प्राप्य तस्याः राजकुमार्याः पित्रा मिलितवान् । तेन सह सम्भाषमाणः - ''अहं भवतः पुत्रीं परिणेतुम् इच्छामि'' इति उक्तवान् । राजकुमार्याः पिता विवरणं किमपि अपृच्छन् - ''भवान् उदरभरणं कथं करिष्यति ?'' इति पृष्टवान् ।

श्रीवर्धनः - ''अहं चित्रकलायां हस्तकौशले च समर्थः अस्मि'' इति उत्तरितवान् । राजकुमार्याः पिता सन्तुष्टः । अनन्तरं श्रीवर्धन-राजकुमार्योः विवाहः वैभवेन सम्पन्नः । तौ श्रीवर्धनस्य गृहमपि आगतौ ।

पुनः अन्यदा श्रीवर्धनः मृगयार्थम् अरण्यं गच्छन् आसीत् । मार्गे एव केचन लुण्ठाकाः तम् अवरुद्धवन्तः । तैः सः ग्रामः लुण्ठितः आसीत् । लुण्ठाकाः राजानं न अभिज्ञातवन्तः । अतः ते तं बन्धिनं कृत्वा आत्मना सह अरण्यं नीतवन्तः ।

श्रीवर्धनः उक्तवान् - ''भवद्भ्यः दातुं मम समीपे किमपि नास्ति'' इति । किन्तु लुण्ठाकाः न अङ्गीकृतवन्तः । सप्ताहः अतीतः। यद्यपि श्रीवर्धनेन धनं किमपि न

दत्तम् तथापि श्रीवर्धनस्य आहारादिविषये लुण्ठाकाः उत्तमां व्यवस्थां कृतवन्तः आसन् ।

अन्ते श्रीवर्धनः एकां सूचनाम् उक्तवान् - ''कृपया मह्यं कतिचन करवस्त्राणि यच्छन्तु । अहं तेषां उपरि वर्णसूत्रैः चित्राणि अङ्कयामि । तानि भवन्तः राजगृहे अपि विक्रेतुं शक्नुवन्ति । तादृशानि करवस्त्राणि राज्ञ्याः अत्यन्तं प्रियाणि । सा निश्चयेन तानि क्रेष्यति । तत् धनं भवन्तः स्वीकर्तुं शक्नुवन्ति'' इति ।

लुण्ठाकाः अङ्गीकृतवन्तः । ते राजधानीं गत्वा वस्त्रापणान् लुण्ठयित्वा बहूनि करवस्त्राणि आनीतवन्तः । श्रीवर्धनः महत्या श्रद्धया तेषाम् उपरि सूत्रैः विन्यासान् रचितवान् । पुष्पविन्यासैः सह कतिचन अक्षराणि अपि सः मध्ये मध्ये योजितवान् आसीत् । अक्षरानभिज्ञाः लुण्ठाकाः तु तत्रत्यानि अक्षराणि न ज्ञातवन्तः । ते करवस्त्राणि राजधानीं नीत्वा राज्ञ्यै विक्रीतवन्तः ।



करवस्त्राणि दृष्ट्वा राज्ञी अनुक्षणं पत्युः हस्तकौशलम् अभिज्ञातवती । तया एतदपि ज्ञातं यत् 'मम पतिः करवस्त्रद्वारा कमपि सन्देशं प्रेषयितुम् इच्छति' इति । सा सर्वाणि करवस्त्राणि क्रीत्वा तानि क्रमेण योजितवती । पत्या कीदृशी परिस्थितिः सम्मुखीक्रियमाणा अस्ति इति तया ज्ञातम् । सा सैनिकेभ्यः रात्रौ सूचनां प्रेषितवती । ते सैनिकाः लुण्ठाकानां स्थानम् अन्विष्य राज्ञः विमोचनं कारितवन्तः । लुण्ठाकाः बद्धाः अभवन् ।

# दीपावलीसम्बद्धाः पौराणिककथाः

*भगवान् रामः, कृष्णः, महबली, यमः, इन्द्रः, काली इत्यादीनां कथाः पुराणेषु उपलभ्यन्ते । एताः कथाः भारतीयपर्वसु उत्कृष्टेन दीपावलीपर्वणा सम्बद्धाः सन्ति ।*

*समग्रे भारते दीपावलीपर्व विविधैः प्रकारैः आचर्यते । दीपावलीसम्बद्धाः बह्व्यः कथाः अपि श्रूयन्ते एव । यस्मिन् पर्वणि दीपानाम् आवलिः = पङ्क्तिः आरच्यते सा एव दीपावली नाम । नवरात्रोत्सवस्य विंशतिदिनानाम् अनन्तरं कार्तिकमासे अक्टोबर्मासे नवम्बर्मासे वा तस्य आचरणं भवति ।*



रामः पत्न्या सीतया, अनुजेन लक्ष्मणेन च सह चतुर्दशवर्षात्मकं वनवासं समाप्य अयोध्यां यदा प्रत्यागतः तदा जनाः नगरं दीपैः अलङ्कृत्य तं स्वागतीकृतवन्तः । तदेव प्रथमं दीपावलीवर्प । ततः आरभ्य तत् अनुवर्तमानम् अस्ति अद्य यावत् ।



भारतस्य केषुचित् भागेषु दीपावली-पर्व पञ्चदिनात्मकं भवति । 'धन-त्रयोदशी'दिने तस्य आरम्भः । तस्मिन् दिने जनैः नूतनानि पात्राणि अनिवार्यतया क्रीयन्ते । दीपावलीदिने पूजाकाले तेषाम् उपयोगः क्रियते । धनत्रयोदशीदिने देवचिकित्सकस्य धन्वन्तरेः अपि पूजा क्रियते । अमृतप्राप्त्यर्थं देवासुरैः यदा समुद्रमथनं कृतं तदा प्राप्तेषु नवसु रत्नेषु अन्यतमः अस्ति धन्वन्तरिः अपि ।

धनत्रयोदश्यां केचन समग्रं गृहं दीपैः अलङ्कुर्वन्ति । ते दीपाः 'यमदीप'नाम्ना निर्दिश्यन्ते । एतद्विषये कथा एवं श्रूयते – कस्यचित् राजकुमारस्य जन्मकुण्डलीं दृष्ट्वा ज्योतिषिकाः उक्तवन्तः यत् विवाहानन्तरं चतुर्थे दिने एषः सर्पदंशनेन मरणं प्राप्स्यति इति । विवाहानन्तरं विषयं ज्ञातवती तस्य पत्नी विषण्णा सती 'पतिरक्षणं करणीयम् एव' इति सङ्कल्प्य चतुर्थे दिने समग्रं गृहं दीपैः

अलङ्कृतवती । शयनप्रकोष्ठे आभूषणानि राशीकृत्य भजन-कीर्त-धार्मिकग्रन्थपठनादिषु सा उद्युक्ता जाता । तस्याः पत्युः प्राणान् अपहर्तुं सर्परूपेण आगतः यमः प्रकोष्ठस्थं सर्वं दृष्ट्वा तस्याः सुमधुरं गानं च श्रुत्वा सन्तुष्टः जातः । आरात्रि सः गानं श्रुत्वा प्रातः ततः निर्गतवान् ।



एवं तस्याः पत्युः प्राणाः रक्षिताः जाताः । मृत्युः यस्मिन् दिने तया विजितः तद्दिनं पर्वरूपेण प्रसिद्धं जातम् । तद्दिने रात्रौ दीपाः ज्वाल्यन्ते इत्यतः तस्य नाम दीपावली इति ख्यातम् अभवत् ।





अनन्तरदिने नरकचतुर्दशी आचर्यते । एतस्मिन् दिने भगवान् श्रीकृष्णः घोरयुद्धं कृत्वा नरकासुरं विजितवान् आसीत् । एतत् दिनं 'रूपचतुर्दशी'नाम्ना अपि निर्दिश्यते । एतस्मिन् दिने केचन सर्वविधमूलानि जले स्थापयित्वा तेन जलेन स्नान्ति ।



तमिळुनाडुराज्ये अमावास्याप्राप्तितः पूर्वम् एव जनैः स्नानं क्रियते । तच्च 'गङ्गास्नानम्' इति उच्यते । एतत् गङ्गास्नानं पवित्रतमत्वेन भाव्यते तैः । स्नानानन्तरं नूतनानि वस्त्राणि धृत्वा मधुरखाद्यं खादन्ति सर्वेऽपि । एतत् खाद्यं लेह्यम् (लेहियम्) इति उच्यते ।







अमावास्यादिने दीपावलीपर्व । एतस्मिन् दिने लक्ष्मीपूजा क्रियते प्रायेण । उत्तरभारतीयाः वणिजः एतस्यां पूजायां विशेषश्रद्धावन्तः । एतस्मिन् दिने प्रचीनगणनापुस्तकानि पिधाय नूतनगणनालेखनारम्भः क्रियते तैः । जनाः गृहाणि स्वच्छीकृत्य नूतनानि वस्त्राणि धरन्ति । पूजां कृत्वा लक्ष्म्याः स्वागतार्थं गृहे सर्वत्र दीपाः ज्वाल्यन्ते ।





अनन्तरदिने प्रतिपदि गोवर्धनपूजा प्रचलति । एतद्विषये कथा एवं श्रूयते - पूर्वं गोकुलवासिनः वर्षाकालस्य अनन्तरं कृतज्ञताप्रकाशनार्थं प्रतिवर्षम् इन्द्रस्य पूजां कुर्वन्ति स्म । किन्तु कृष्णः तान् उक्तवान् - 'किम् इन्द्रस्य पूजनेन ? गोवर्धनपूजां कुर्वन्तु' इति । एतस्मात् क्रुद्धः इन्द्रः अजस्रवृष्टिपातनेन गोकुलं समग्रं जले मज्जितवान् । तदा गोकुलवासिनां रक्षणार्थं श्रीकृष्णः कनिष्ठिकया गोवर्धनपर्वतम् उन्नीय छत्रवत् गृह्णन् जनान् पशून् च रक्षितवान् । ततः गोवर्धनपूजापरम्परा आरब्धा ।





पञ्चमे दिने भ्रातृद्वितीया आचर्यते । तस्मिन् दिने मृत्युदेवः यमः स्वभगिन्याः यम्याः गृहं गतवान् आसीत् । भ्रातुः मेलनात् यमी नितरां सन्तुष्टा । अतः सा भ्रातरं तिलकादिभिः अलङ्कृत्य उत्सवम् आचरितवती । स्नेह-प्रतीकरूपेण तौ परस्परयोः कृते उपायनानि अपि दत्तवन्तौ । तस्मात् दिनात् एतस्य आचरणम् आरब्धम् । भ्रातृद्वितीयायां भ्रातरः भगिन्याः गृहं गत्वा उपायनानि दत्त्वा तिलकादिकं धारयन्ति ।

# नरकासुरस्य वधः

*(दीपावलीसम्बद्धा पौराणिककथा)*



*पर्वसु विशेषमहत्त्वम् अस्ति दीपावलीपर्वणः । दीपावलीसम्बद्धाः अनेकाः कथाः श्रूयन्ते । यस्मिन् गृहे दीपावलीदिने दीपः प्रकाशते तस्मिन् गृहे लक्ष्मीः वासं करिष्यति इति जनानां विश्वासः अस्ति । दीपावल्याः दिनात् पूर्वं श्रीकृष्णः नरकासुरं संहृतवान् इत्यतः तत् दिनं नरकचतुर्दशी इति उच्यते । एवं नरकासुरसंहारकथा दीपावल्या सम्बद्धा अस्ति ।*

श्रीकृष्णः लोककण्टकस्य नरकासुरस्य वधं कृत्वा लोककल्याणं सम्पादितवान् । दीपावली-पर्वणः पूर्वतनं दिनं नरकचतुर्दशीत्वेन निर्दिश्यते । आ बहोः कालतः एषा परम्परा अनुवर्तते ।

महाविष्णुः हिरण्याक्षस्य वधार्थं वराहावतारं प्राप्तवान् । वराहमूर्तेः भूमातुः च पुत्रः एव नरकासुरः । यदा सः जन्म प्राप्तवान् तदा दैवज्ञाः तस्य जन्मकुण्डलीं परिशील्य उक्तवन्तः यत् एषः चक्रवर्ती, महाराक्षसः वा भविष्यति इति । भूमातुः अपेक्षा आसीत् यत् मम पुत्रः धर्ममार्गानुयायी एव भवेत्, दुष्टप्रभावः तदुपरि न पतेत् इति । अतः सा एतद्विषये विशेषावधानम् ऊढवती । तथापि असुराणां गुरुः शुक्राचार्यः कदाचित् नरकासुर-समीपम् आगत्य अवदत् - "वत्स ! असुराणां संरक्षणार्थम् एव भवतः जन्म जातम् । अतः स्वस्य दायित्वं स्मरन् भवान् स्वकर्तव्यं निर्वहतु" इति ।

एतस्मात् नरकासुरस्य जीवने महत् परिवर्तनं जातम् । सः कठोरतपस्यां कृत्वा ब्रह्मतः अपूर्वान् वरान् प्राप्तवान् । भूदेव्याः प्रार्थनां पुरस्कृत्य महाविष्णुः तस्मै नारायणास्त्रं दत्तवान् ।

अपूर्वाणां वराणां प्राप्तितः नरकासुरस्य अहङ्कारः प्रवृद्धः । सः सज्जनान्, देवान् च पीडयितुम् उद्युक्तः अभवत् । मुनिभिः क्रियमाणेषु यज्ञेषु तेन विघ्नाः उत्पादिताः, यज्ञवेदिकाश्च नाशिताः । एतावत् एव न, सः इन्द्रलोकम् अपि कदाचित् आक्रान्तवान् । युद्धे इन्द्रं पराजित्य इन्द्रस्य मातुः अदित्याः कर्णकुण्डले बलात् नीतवान् ।



वरुणस्य छत्रम् अपि तेन बलात् नीतम् । इन्द्रस्य सिंहासने दर्पेण उपविश्य सः आदिशत् - ''देवाः सर्वे मारणीयाः'' इति । तस्य विकटाट्टहासेन इन्द्रसभा प्रतिध्वनिता जाता ।

तदनन्तरं सः स्वस्य राजधानीं प्राग्ज्योतिषपुरं गतवान् । राक्षसशासनस्य आरम्भः तेन कृतः । सहस्रशः महिलाः तेन कारागारे स्थापिताः ।

मुनयः देवाः च द्वारकां गत्वा श्रीकृष्णं निवेदितवन्तः - ''मदोन्मत्तः नरकासुरः अस्मान् सर्वान् बहुधा पीडयन् अस्ति । तत्कारणतः अस्माकं जीवनं कष्टकरं जातम् । एतस्मात् अस्मान् रक्षितुं भवान् एव समर्थः'' इति ।

श्रीकृष्णः सत्यभामासमेतः गरुडम् आरुह्य प्राग्ज्योतिषपुरं गतवान् । भीमकायान् द्वार-पालकान् संहृत्य दुर्भेद्यं दुर्गं भित्त्वा सः अन्तः प्रविष्टवान् । श्रीकृष्ण-नरकासुरयोः घोरं युद्धं प्रवृत्तम् । नरकासुरेण प्रयुक्तैः आयुधैः व्रणितः श्रीकृष्णः मूर्च्छां गतः । तदा सत्यभामा धनुः बाणान् च गृहीत्वा युद्धम् अनुवर्तितवती । विपत्काले पत्युः साहाय्यं कुर्वती सा स्वस्य अर्धाङ्गिनीत्वं सार्थकं कृतवती । सत्यभामया प्रयुक्तानां बाणानां कारणतः नरकासुरः निर्वीर्यः जातः । अत्रान्तरे सचेतनतां गतः श्रीकृष्णः युद्धस्य अनुवर्तनं कृतवान् । अन्ते सुदर्शनचक्रं प्रयुज्य सः नरकासुरं संहृतवान् ।



नरकासुरेण याः कारागारे स्थापिताः आसन् ताः कारागारात् मोचिताः श्रीकृष्णेन । इन्द्र-लोकतः नरकासुरः अदितेः ये कर्णकुण्डले अपहृतवान् आसीत् ते तेन प्रत्यर्पिते । वरुणस्य छत्रम् अपि तेन प्रत्यर्पितम् ।

लोककण्टकभूतः नरकासुरः संहृतः इत्यतः जनाः नितरां सन्तुष्टाः । ते सन्तोषातिरेकेण उत्सवम् एव आचरितवन्तः ।

नरकासुरसंहारः कार्तिकमासे कृष्ण-पक्षे चतुर्दश्यां प्रवृत्तः । अतः प्रतिवर्षं तस्मिन् दिने नरकचतुर्दशी आचर्यते लोके ।

मानवजीवितोद्देशः परोपकारः एव । अन्येषां पीडनं यः करोति सः राक्षसः इति उच्यते । एतादृशान् दुष्टान् दण्डयित्वा प्रजानाम् उद्धारं करोति भगवान् । लोके सर्वैः अपि एतत् अवगत्य सन्मार्गे प्रवृत्तिः प्रदर्शनीया । यदि एवं क्रियते तर्हि प्रतिदिनम् अपि दीपावली भवेत् । नरकचतुर्दशी एतम् उदात्तं सन्देशं ज्ञापयति अस्मान् ।



# दीपस्य आत्मकथा

अहं प्रसन्नः उत्साहयुक्तः च अस्मि । यतः दीपानाम् उत्सवः दीपावली आसन्ना अस्ति । आवर्षं पेटिकायां बन्धने यत् आसम् ततः मोक्षः मम । अहं पेटिकातः बहिः आगच्छन् अस्मि । एतदवसरे मम चाकचक्यता सम्पाद्यते जनैः । मम उदरे तैलं प्रपूर्य वर्तिका अपि स्थाप्यते । अग्निं संयोज्य मां प्रकाशदातारं विधास्यन्ति जनाः ।

एतावता एव भवद्भिः ज्ञातं स्यात् - अहं कः इति । आम् ! अहम् अस्मि पित्तलमयः दीपः । दशभ्यः वर्षेभ्यः पूर्वं वाराणस्यां कश्चन लोहकारः मां निर्मितवान् । तत् नगरं लोहोद्यमनिमित्तं प्रसिद्धम् अस्ति । यद्यपि अहं सामान्यः दीपः, तथापि मां परितः अनेके उदात्ताः विचाराः आनन्दः च प्रसृतः अस्ति । मम सुन्दरं रूपं यदा सिद्धं तदा अहम् एकम् आपणं प्रति प्रेषितः विक्रयणार्थम् । सौभाग्यवशात् मां दृष्टवती प्रथमा ग्राहिका एव क्रीतवती । सा आसीत् शकुन्तलावर्मा । सा प्रतिवेशिन्याः ऊर्मिलायाः विवाहावसरे मां तस्यै उपायनीकृतवती ।

एवं दशभ्यः वर्षेभ्यः पूर्वम् अहम् ऊर्मिलागृहम् आगतः । ततः आरभ्य अत्रैव वसामि । मम साहाय्येन आचरिता प्रथमा दीपावली अद्यापि मम स्मृतिपथे अस्ति । तस्मिन् दिने ऊर्मिला नववधूः इव आत्मानं सुन्दरतया अलङ्कृतवती आसीत् । तया धृतायाः कौशेयशाटिकायाः आञ्चलं शिरसि आवृतम् सत् विशेषतः शोभते स्म । तस्याः सौन्दर्यं मम प्रकाशकारणतः अधिकतया प्रकाशमानम् आसीत् । गृहस्य देहल्याः समीपे अहं तया स्थापितः । मां परितः अनेके लघवः मृद्दीपाः ज्वालिताः आसन् । गृहदेवताप्रकोष्ठे उन्नतः कश्चन रजतदीपः अपि स्थापितः आसीत् ।

ऊर्मिलायाः गृहजनाः आढ्याः । अतः विविध-दीपानां सङ्ग्रहे तेषां विशेषरुचिः । यदा यदा विरामः प्राप्यते तदा ते भ्रमणार्थं गच्छन्ति स्म । यत्र यत्र गम्यते तत्र पारम्परिकक्रमेण निर्मितः उत्तमः दीपः कोऽपि लब्धः चेत् तैः आनीयते स्म एव । अतः एव तेषां गृहे अनेकविधाः अपूर्वाः दीपाः सन्ति । वङ्गदेशीयः 'टरकोटा' दीपः, तमिळुनाडीयः उन्नतः मयूरमुखः 'कुत्तुविळक्कु'दीपः, कामाक्षीरूपयुक्तः 'कामाक्षीविळक्कु' दीपः, कर्णाटकीयः कृष्णमृत्तिका-दीपः, महाराष्ट्रियाः लघ्वाकारकाः रजतदीपाः, गुरुवारीयः महाकारकः पित्तलदीपः इत्यादयः अनेके दीपाः सन्ति तत्र । पूजा - नीरजनादिनिमित्तं क्रीताः दीपाः तु असङ्ख्याः सन्ति एव ।

समग्रे भारते पूजाकाले दीपाः विशेषतः उपयुज्यन्ते । प्राचीने काले दीपाः न केवलं पूजा-काले, अपि तु युद्धार्थं निर्गमनसमये, युद्धतः प्रत्यागमनसमये चापि उपयुज्यन्ते स्म । शिशोः जन्म यदा भवति तदा अपि दीपज्वालनेन स्वागत-व्यवस्था क्रियते स्म ।

दीपान् गृहीत्वा रमणीयतया नृत्यम् अपि क्रियते इति जानन्ति खलु भवन्तः ? पञ्जाबराज्ये विवाह-काले एतादृशम् अपूर्वं नृत्यं प्रचलति । गुजरातराज्ये 'गर्भा'नामके नृत्ये अपि दीपानाम् उपयोगः क्रियते ।

ऊर्मिलायाः प्राचीना सखी शकुन्तलावर्या तण्डुलपिष्टेन निर्मिते दीपे तैलं निक्षिप्य ज्वालयित्वा थायीमासे (तमिळुभाषीयः शब्दः एषः) प्रति-शुक्रवासरे पूजां करोति स्म । तमिळुनाडुराज्ये एषा परम्परा अद्यापि प्रवर्तते ।

ऊर्मिलाकुटुम्बीयाः सर्वे अपि मयि आदरं प्रकटयन्ति । किन्तु एकः एव मां न इच्छति । स च जिम्मिनामकः स्लशेषियन्शुनकः । सः दीपावल्यै क्रुध्यति । सर्वत्र दीपान् दृष्ट्वा आतङ्कयुक्तः भवति



अपि । एतद्विषये गृहजनाः सर्वे तस्य व्यवहारतः असन्तुष्टाः सन्ति । मृद्दीपाः ज्वालिताः चेत् तु सः पादेन नुदन् तान् पातयित्वा भञ्जयति ।

अद्य दीपावल्याः प्रथमदिनम् । अद्य ऊर्मिलायाः उभे पुत्र्यौ स्नेहा नीता च उत्साहेन स्तः । शुनकः जिम्मिः अपि तथैव । सः गृहे सर्वत्र अटन् अस्ति । ऊर्मिलाभगिनी पुत्रीभ्यां सह मिलित्वा दीपान् ज्वालयन्ती अस्ति । अहं तु यथापूर्वं उत्साही अस्मि । यदा ज्योतिः दृश्यते तदा मयि उत्सुकता-तेजस्वितादीनां तरङ्गाणां सञ्चारः भवति ।

ऊर्मिलाभगिनी मां थालथल्येन शोभमानायां स्थालिकायां निक्षिप्य नयन्ती आसीत् । जिम्मिः तस्याः कण्ठपर्यन्तं तदा तदा कूर्दन् ताम् अनुसरति स्म । स्वागतप्रकोष्ठस्य भित्तौ, पूजागृहे, गृहस्य पुरतः वितर्द्यां च दीपपङ्क्तिः विराजते स्म । द्वारस्य पुरतः रङ्गवल्लीं विलिख्य तां परितः अपि लघुदीपाः स्थापिताः ।

इदानीं स्थालिकायाम् अहम् एकः एव अवशिष्टः । यावत् ऊर्मिलावर्या मां स्थापयितुं हस्तेन गृहीतवती तावता जिम्मिः कूर्दन् तस्याः हस्तं पादाभ्यां गृहीतवान् । हन्त, कम्पनकारणतः अहं तस्याः हस्ते पतितः, वर्तिका च तस्याः शरीरे पतिता । अहं दिग्भ्रान्तः आश्चर्यचकितः च । 'किम् अहम् आकस्मिकदाहस्य कारणं जातः ?' इति मम मनः शङ्काग्रस्तं जातम् । अहं भूमौ पतितः । मत्तः तैलं निर्गतम् । ऊर्मिलायाः किं जातम् इत्येव मम चिन्ता ।

जिम्मिः पुनरपि कूर्दनम् अकरोत् । ततः वर्तिका तस्य पादस्य उपरि पतिता । तदीयः पादः किञ्चिदिव दग्धः । अतः सः वेदनां प्राप्नोत् । किन्तु अत्रान्तरे ऊर्मिला प्रवृत्तम् अवगच्छन्ती झटिति जिम्मेः पादतः वर्तिकाम् अपनीतवती । अतः महतः अपायात् जिम्मिः रक्षितः जातः । अहं समाधानेन निःश्वसितवान् । जिम्मिविषये मम करुणा प्रीतिश्च उत्पन्ना । सः सर्वदा चटुलतां दर्शयति । सा च चटुलता सर्वेषां प्रिया एव । किन्तु कदाचिदेव सा अनर्थकारणं भवति ।

ऊर्मिलायाः पुत्र्यौ स्नेहा नीता च धनत्रयोदशीतः गोवर्धनपूजापर्यन्तं, चत्वारि दिनानि यावत्, दीपान् ज्वालितवत्यौ । एतदवसरे जिम्मिः अपि ताभ्यां सह सन्तोषेण अतिष्ठत् । दीपनिर्वापणरूपम् अकार्यं कदापि न अकरोत् सः । पुच्छं चालयन् गाम्भीर्येण व्यवहरति सः इदानीम् । अस्माकं परिवारः सुखि-परिवारः अस्ति ।

# लक्ष्मीः, रजककुलीया वृद्धा च

कश्चन राजा । सः राज्ञ्यां विशेषानुरागवान् आसीत् । राज्ञी परमसुन्दरी हसन्मुखी च आसीत् । तस्याः सौन्दर्यं वर्णनातीतम् एव वस्तुतः । राजा राज्ञी च वैभवेपेत-जीवनं यापयन्तौ सन्तोषेण निवसतः स्म । एकदा राज्ञः आस्थानं प्रति कानिचन रत्नानि आनीतवान् कश्चित् वणिक् । तानि दृष्ट्वा राजा आश्चर्य-चकितः । दर्शनसमनन्तरम् एव तानि रत्नानि राज्ञः मनः अहरन् । राजा सङ्कल्पितवान् यत् एतानि सुवर्णहारे संयोज्य राज्ञ्यै समर्पणीयानि इति ।



एतदर्थं सः राज्ये स्थितान् समर्थान् स्वर्णकारान् राजास्थानं प्रति आनायितवान् । 'भवद्भिः निर्मितान् अपूर्वान् हारान् दर्शयन्तु । यः हारः चीयते तस्य निमित्तं यथायोग्यं मूल्यं दीयते' इति उक्तवान् राजा । सुवर्णकाराः विविधान् हारान् दर्शितवन्तः । राजा राज्ञ्याः जन्मदिने रत्नहारम् उपायनीकर्तुम् इच्छति स्म ।

बहुधा परिशील्य राजा एकं हारं चितवान् । तादृशम् एव रत्नहारं कारितवान् च । तं हारं दृष्ट्वा नितरां सन्तुष्टा राज्ञी उक्तवती - 'एतम् अहं प्रतिदिनं धरिष्यामि' इति । एतत् श्रुतवतः राज्ञः सन्तोषः प्रवृद्धः ।

प्रासादात् अनतिदूरे एका स्वच्छा नदी प्रवहति स्म । राज्ञी तत्रैव प्रतिदिनं स्नानं करोति स्म । प्रतिदिने इव राज्ञी तस्याः सख्यः च वस्त्राणि आभरणानि च तीरे स्थापयित्वा

स्नानार्थं गतवत्यः । तावता कस्यचित् गृध्रस्य दृष्टिः वस्त्राणां मध्ये स्थिते प्रकाशमाने हारे पतिता । सः पादाभ्यां तं हारम् उन्नीय उड्डयनं कृतवान् । यावत् अन्ये एतत् दृष्टवन्तः तावता गृध्रः सुदूरं गतः आसीत् ।

अमूल्यस्य हारस्य अदृश्यताप्राप्तितः राज्ये हाहाकारः प्रवृत्तः । राज्ञ्याः दुःखं तु वर्णनातीतम् । राजा घोषितवान् यत् यः हारम् अन्विष्य आनीय दास्यति तस्मै तदपेक्षितं दीयते इति । पारितोषिकप्राप्तीच्छया सर्वे हारस्य अन्वेषणे उद्युक्ताः अभवन् । जनाः यत्र सम्मिलन्ति तत्र एका एव चर्चा - 'हारः कुत्र गतः स्यात् ?' इति ।

एतादृश्यां चर्चायाम् अनासक्ता आसीत् काचित् रजतकुलीया वृद्धा । सा राजधानीतः सुदूरे एकस्मिन् जीर्ण-कुटीरे निवसति स्म । किन्तु तस्याः कुटीरं सर्वदा स्वच्छं भवति स्म । यस्मिन् दिने गृध्रः हारं गृहीत्वा गच्छन् आसीत् तस्मिन् दिने सा वृद्धा एकां गृहगोधिकां मारयित्वा छदेः उपरि क्षिप्तवती । आहारप्राप्त्यर्थं कुटीरस्य उपरि उपविष्टः गृध्रः गृहगोधिकां चञ्च्वा गृहीत्वा हारं तत्रैव परित्यज्य अग्रे उड्डयनम् अकरोत् ।



किमपि भारयुक्तं वस्तु गृहस्य उपरि पतितम् इति ज्ञातवती वृद्धा बहिः आगत्य हारं स्वीकृतवती । दर्शनमात्रेण एव सा ज्ञातवती यत् एषः हारः महाराज्ञ्याः एव इति । काष्ठानां विक्रयणार्थं यदा राजधानीं प्रति गतं तदा हारापहणवार्ता, पुरस्कारघोषणवार्ता च तया श्रुता । गृहं प्रत्यागता सा वस्त्रेण तं हारं सम्यक् आच्छाद्य राजधानीं गतवती । प्रासादं प्राप्य द्वारपालकान् निवेदितवती यत् अहं राजानं द्रष्टुम् इच्छामि इति । राजाज्ञानुगुणं सेवकाः ताम् आस्थानस्य अन्तः आनीतवन्तः ।

''मया श्रुतं यत् राज्ञ्याः कश्चन अपूर्वः हारः न दृश्यते इति'' इति उक्तवती सा रजतकुलीया वृद्धा ।

''आम्'' इति उक्तवान् राजा ।

''यः हारम् आनीय दास्यति तस्मै सः यत् इच्छति तत् दीयते इति भवता उद्घोषितम् । एतस्य वचनस्य पालने भवतः आदरः अस्ति एव खलु ?'' - वृद्धा पुनः पृष्टवती ।

''निश्चयेन'' इति उक्तवान् राजा ।

वस्त्राणां मध्ये स्थितं हारं दर्शयन्ती वृद्धा उक्तवती - ''सः अत्र अस्ति, पश्यतु'' इति । हारः कथं प्राप्तः इत्यपि सा विस्तरेण उक्त्वा - ''महाप्रभो, अहम् इदानीं यत् प्रार्थयामि तत् दातव्यम् एव भवता'' इति उक्तवती ।

'एषा किं वा प्रार्थयेत् ? किं प्रभूतं धनं प्रार्थयेत्, उत अन्यत् किमपि ?' इति चिन्तयन्

उपविष्टवान् राजा । 'वृद्धा किं वा प्रार्थयेत्' इत्येषः प्रश्नः सर्वान् सभासदः कुतूहलसागरे न्यमज्जयत् । वृद्धा तु धनकनकादिकं न इच्छति स्म । भूमिसम्पत्यादिकम् अपि न इच्छति स्म । तर्हि तया प्रार्थयितुम् इष्टं तत् अपूर्वं वस्तु किं स्यात् ?

वृद्धा महाराजम् उक्तवती - ''प्रभो, विजयी भव । अचिरात् एव दीपावली सम्पन्ना भविष्यति । दीपावलीदिने रात्रौ मम गृहात् ऋते अन्यत्र कुत्रापि दीपः ज्वालितः न स्यात् इति मम इच्छा । तस्मिन् दिने राजभवने अपि दीपाः न ज्वालनीयाः'' इति ।



राजा एतां प्रार्थनाम् अङ्गीकृतवान् । स तु अतुलैश्वर्यम् अपि दातुं सिद्धः आसीत् । व्ययं विना पूरयितुं योग्याम् अपेक्षां श्रुत्वा सः सन्तुष्टः अभवत् । वृद्धायाः अपेक्षायाः अनुगुणं सः राजाज्ञां कारितवान् यत् दीपावलीदिने देशे कुत्रापि दीपः न ज्वालनीयः इति । अतः दीपावलीदिने समग्रे देशे अन्धकारः आसीत् । वृद्धायाः कुटीरे एव दीपप्रकाशः दृश्यते स्म ।

मध्यरात्रे लक्ष्मीः तं देशं प्रविष्टवती । किन्तु तया सर्वत्र अन्धकारः एव दृष्टः । एतेन सा नितरां खिन्ना । सर्वत्र सञ्चारात् तया एकत्र दीपप्रकाशः दृष्टः । लक्ष्मीः वेगेन तत् स्थलं प्राप्य द्वारशब्दं कृतवती । वृद्धा पूजायां निरता आसीत् । सा पूजां कुर्वती एव पृष्टवती - ''कः तत्र ?'' इति ।

''बहिः सर्वत्र अन्धकारः । मम भीतिः भवति । अतः कृपया अन्तः आगमनार्थम् अनुज्ञां ददातु कृपया'' इति दैन्येन प्रार्थितवती लक्ष्मीः । सा स्वच्छं प्रकाशमयं च प्रदेशम् एव सर्वदा इच्छति स्म ।

''भवती का ?'' - वृद्धा पृष्टवती ।

''अहम् अस्मि लक्ष्मीदेवी । दीपावली-निमित्तम् अहं देवलोकतः अत्र आगता । एतस्मिन् वर्षे दीपावली मम सन्तोषाय न अभवत् । सर्वत्र अन्धकारः । अन्धकार-दर्शनतः मम सन्तोषः कथं भवेत् ?'' इति उक्तवती लक्ष्मीः ।

''अद्यावधि भवती दीपावलीदिने कदापि मम कुटीरं न आगतवती । एतादृश्यै भवत्यै किमर्थं प्रवेशः दातव्यः मया ?'' इति अपृच्छत् वृद्धा ।

लक्ष्मीः पुनरपि दैन्येन प्रवेशानुज्ञां प्रार्थितवती । तथापि वृद्धा अङ्गीकारं न सूचितवती । सा अन्ते अवदत् - ''इतःपरं कदापि भवती मम गृहं यदि न त्यजेत्, तथा यदि प्रतिज्ञां कुर्यात्, तर्हि अहं प्रवेशानुज्ञां दद्याम्'' इति ।

लक्ष्मीः एतं नियमम् अङ्गीकृत्य तेजस्विना ज्योतिषा सह कुटीरं प्रविष्टवती । अनन्तरकाले तस्याः वृद्धायाः किमपि कष्टं न जातम्, यतः लक्ष्मीः तस्याः गृहे सदा निवसति स्म ।




# दीपावलीस्वप्नाः

प्रातःकालीनः सूर्यः आकाशे सुवर्णकिरणान् प्रसारयन् आसीत् । 'अम्बा'नामकस्य ग्रामस्य बालाः राजपुरं प्रति गन्तुं सन्नाहं कुर्वन्तः आसन् ।

राजपुरे राजशेखरवर्यस्य किञ्चन निर्माणागारम् आसीत् । तत्र स्फोटकानि निर्मीयन्ते स्म । राजशेखर-वर्यः लण्डन्नगरे निवसन् वाणिज्यव्यवहारं निर्वहति स्म । चन्द्रमोहननामकः मध्यवयस्कः निर्माणागारस्य व्यवस्थापकत्वेन कार्यं करोति स्म । निर्माणागारे प्रौढानां नियुक्तिः कृता चेत् आधिकवेतनं दातव्यं भवति इति, प्रौढानां अपेक्षाः अपि अधिकाः भवन्ति इति च चिन्तयन् चन्द्रमोहनः बालान् एव अधिक्येन कार्ये नियोजयति स्म । सः बालेभ्यः अल्पं वेतनं ददाति स्म । स्वस्य कोषस्य पूरणार्थं तु विविधान् उपायान् चिन्तयति स्म । सर्वे बालाः तस्मात् भीताः भवन्ति स्म अपि । दीपावलीकारणतः निर्माणागारे कार्यम् अधिकम् आसीत् । अतः व्यवस्थापकः अधिकान् बालान् कार्ये नियोजितवान् आसीत् ।

अम्बाग्रामस्य मोहनः, कृष्णः, सीता, जानसनः, अफजलः, अन्ये सप्त बालाः च निर्माणागारं प्रति कार्यार्थं गच्छन्ति स्म । आप्रातः आ सायं कार्यं करणीयं भवति स्म तैः । तेषां वयः आसीत् १०-१५ वर्षाणि । तेषाम् आयम् एव अवलम्बते स्म तेषां कुटुम्बानि । ते कार्यार्थं गच्छन्ति इत्यतः एव तेषां गृहेषु दिने द्विवारं भोजनं प्रचलति स्म । अतः एव सुदूरस्थं राजपुरं प्रति अपि गन्तुं सिद्धाः सन्तः ते उषसि एव उत्थाय गृहात् निर्गच्छन्ति स्म ।

अफजलः चिन्तयन् गच्छन् आसीत् । तस्य माता अस्वस्था आसीत् । चतुर्वर्षीया भगिनी 'स्फोटकानि आवश्यकानि' इति रोदनं कुर्वती आसीत् । दीपावली-समये सर्वे यदा स्फोटकानि स्फोटयन्ति तदा मया अपि स्फोटकं स्फोटनीयम् एव इति तस्याः प्रबला इच्छा आसीत् । अफजलस्य पिता अपघातेन दिवं गतः आसीत् । अतः भगिन्याः इच्छायाः पूरणं स्वकर्तव्यं भावयति स्म अफजलः । धनाभावतः ईद्पर्वणः आचरणम् अपि सम्यक् न कृतम् आसीत् । एतत्सर्वं चिन्तयन् गच्छन् आसीत् अफ़जलः ।



मोहनः कृष्णः च उच्चस्वरेण गायन्तौ गच्छतः स्म । मार्गे बीजपूरफलं क्रीत्वा खादन्ती गच्छति स्म सीता । पक्षिणां ध्वनिम् अनुकुर्वन् गच्छन् आसीत् जॉनसनः ।

ते सर्वे समये निर्माणागारं प्राप्तवन्तः । ते इव अन्येभ्यः ग्रामेभ्यः अपि षष्ट्यधिकाः बालाः आगताः आसन् । रासायनिकपादार्थानां मिश्रणं तैः हस्तेन एव करणीयं भवति स्म । अतः तेषां हस्तयोः चर्म उत्थितम् आसीत् । हस्तयोः वेदना अपि भवति स्म । रासायनिकपदार्थमिश्रणसमये पूर्वं रब्बरावरणानि दीयन्ते स्म । तानि यदा नष्टानि तदा नूतनानि न आगतानि एव । अनन्यगतिकतया इदानीं मिश्रणसमये हस्तयोः एव साक्षात् उपयोगः करणीयः आसीत् । एवं मिश्रणसमये वेदनाम् अनुभूय पार्श्वे स्थितवान् अफ्जलः । तावता दूरवाणीध्वनिः श्रुतः । व्यवस्थापकः चन्द्रमोहनः दूरवाणीम् उन्नीय - ''कः तत्र भाषते ?'' इति पृष्टवान् । उत्तरवक्तुः स्वरं श्रुत्वा सः दिग्भ्रान्तः । कृत्रिमहासं प्रदर्शयन् सः अवदत् - ''नमस्काराः श्रीमन् ! अत्र सर्वं सुष्ठु प्रचलति । अत्रत्यस्थितिविषये चिन्ता करणीया नास्ति । सद्यः एव सर्वेषां वेतनं वर्धितम् अस्ति । सर्वे कर्मकराः सन्तुष्टाः सन्ति । श्वः परश्वः वा समग्रां गणनां भवते प्रेषयिष्यामि । अत्रत्यस्थितेः निवारणार्थं भवतः आगमनं न आवश्यकम् । वृथा श्रमः किमर्थम् ? यदि काऽपि समस्या स्यात् तर्हि अहम् एव सूचयिष्यामि'' इति ।



अफ्जलः द्वारस्य पार्श्वे स्थित्वा एतत् सम्भाषणं श्रुतवान् । सः अवगतवान् यत् निर्माणागारस्वामिनः एव एषा दूरवाणी इति । व्यवस्थापकः मां न पश्येत् इति चिन्तयित्वा अफ्जलः मौनेन ततः निर्गतवान् ।

सायं प्रतिगमनसमये व्यवस्थापकस्य वचनानि एव तस्य कर्णयोः गुञ्जन्ति स्म । तस्मात् सम्भाषणात् सः अवगतवान् यत् निर्माणागारस्वामी अतिसज्जनः इति । 'अत्र निर्माणागारे यत् अन्याय्यं प्रचलति तत् स्वामी न जानाति । आत्मना यत् कृतं तत् गोपयन् व्यवस्थापकः स्वामिनं वञ्चयन् अस्ति । अत्रत्या स्थितिः स्वामिना कथं ज्ञायेत ? एतदर्थं कोऽपि उपायः अवश्यं चिन्तनीयः । स्वामी विषयं यथा जानीयात् तथा करणीयम्'' इति चिन्तितवान् अफ्जलः ।

सः आत्मना ज्ञातं, स्वस्य विचारं च सीताम् उक्तवान् । सीता द्वादशवर्षीया । अफ्जलतः वर्षेण ज्येष्ठा सा । वर्षद्वयं विद्यालयं गतवती सा दारिद्र्यकारणतः विद्यालयगमनं परित्यक्तवती आसीत् ।

अफ्जलस्य सूचनायाः अनुगुणं सा सुन्दरैः अक्षरैः स्वामिने एकं पत्रं सज्जीकृतवती । तत्र निर्माणागारस्य स्थितिं विस्तरेण विवृत्य 'निर्माणागारस्य स्थितिं प्रत्यक्षं द्रष्टुं भवता सकृत् आगन्तव्यम्' इति निवेदितम् आसीत् । अफ्जलः तत्र स्वस्य हस्ताङ्कनं कृतवान् ।

अनन्तरदिने केनचित् कारणेन सीता विलम्बेन निर्माणागारम् आगतवती । व्यवस्थापकः तां यदा सम्यक् तर्जयन् आसीत् तदा अफ्जलः विना शब्दं व्यवस्थापकस्य प्रकोष्ठं गतवान् । यथा निर्णीतं तथा कृत्वा बहिः आगतवान् सः ।

अनन्तरदिने सीता स्वग्रामीणैः अन्यैः बालकैः सहैव समये एव गृहात् निर्गतवती, किन्तु सोद्देशं मध्येमार्गं स्थितवती च । अन्ये यदा निर्माणागारं प्राप्तवन्तः तदा व्यवस्थापकः अपृच्छत् - ''सीता किमर्थं न आगता ?'' इति ।

कृष्णः यावत् किमपि वक्तुम् उद्युक्तः तावता अफ्जलः अवदत् - ''यदा वयं प्रस्थिताः तदा अपि सा निद्रामग्ना एव आसीत्'' इति ।

''अस्तु तावत् । भवन्तः वा कार्यार्थम् आगताः खलु ? हुँ, किमर्थं विलम्बः ? सर्वे स्वस्वकार्ये मग्नाः भवन्तु'' इति सर्वान् तर्जयन् द्वारसमीपे एव स्थितवान् व्यवस्थापकः ।

'एषः एव सुसमयः' इति चिन्तयन् अफजलः मन्दगत्या व्यस्थापकप्रकोष्ठं प्रविष्टवान् । उत्पीठिकायाः उपरि एकं महागणनापुस्तकम् आसीत् । 'एतत् एव प्रायः स्वामिने प्रेषयिष्यते' इति विचिन्त्य सः कोषस्थं पत्रं निष्कास्य तस्य अन्तः स्थापयित्वा बिडालगत्या बहिः आगतवान् ।

सायं प्रतिगमनसमये तेन व्यवस्थापकप्रकोष्ठे दृष्टिः प्रसारिता । तत्र बहूनि गणनापुस्तकानि दृष्टानि । किन्तु प्रातः यत् दृष्टं तत् तु न आसीत् । सः अचिन्तयत् - 'मया कोऽपि दोषः तु न आचरितः स्यात् खलु ? मया स्थापितं पत्रं यदि व्यवस्थापकस्य हस्तगतं स्यात् तर्हि अपायः निश्चितः । सः माम् उद्योगात् च्यावयेत् । यदि मम उद्योगः नष्टः भवेत् तर्हि मातुः भगिन्याः च पोषणं कष्टाय भवेत्' इति ।

एकस्मिन् दिने प्रातःकाले निर्माणागारस्य पुरतः एकं सुन्दरं विशालं कार्यानम् आगत्य अतिष्ठत् । तत् दृष्ट्वा सर्वे बालाः आश्चर्यचकिताः । व्यवस्थापकः सम्भ्रान्तः सन् बालकानां समीपम् आगत्य तान् निर्माणागारस्य पृष्ठभागं नीत्वा - ''अद्य भवन्तः सर्वे गृहं गच्छन्तु । अस्माकं स्वामी अद्य आगतः अस्ति । प्रातः एव भवतां तेजोहीनं मुखं द्रष्टुं न इच्छति सः । भवतः सर्वान् उद्योगात् च्यावयेत् अपि सः'' इति उक्त्वा किञ्चित् विचिन्त्य पुनः अवदत् - ''कष्टात् रक्षणार्थम् एकः उपायः अस्ति । 'अस्माकं व्यवस्थापकः उत्तमः अस्ति, सः अस्माकं योगक्षेमं सम्यक् पश्यति' इति वदन्तु । तथैव वदन्ति खलु भवन्तः ?'' इति ।

तावता राजशेखरवर्यः हठात् तत्र आगतवान् । ''किं प्रवर्तते अत्र ? बालानाम् अत्र किं कार्यम् ? अफजल-नामकः कः भवत्सु ? तेन सह अहं वार्तालापं कर्तुम् इच्छामि'' इति अवदत् सः ।

बालाः अफजलं हस्तसङ्केतेन सूचितवन्तः । ''अफजल ! आगच्छतु अत्र । भीतेन भवितव्यं नास्ति भवता'' इति वदन् राजशेखरवर्यः तस्य हस्तं दृष्ट्वा - ''भवतः अङ्गुलयः दग्धाः इव भासन्ते खलु ! किमर्थं तथा जातम् ?'' इति अपृच्छत् ।

अन्येषाम् अपि अङ्गुलयः चर्मावरणहीनाः दृष्टाः तेन । बालानां मुखात् प्रवृत्तं सर्वं श्रुतवान् सः ।

सर्वं श्रुत्वा राजशेखरवर्यः कोपेन व्यवस्थापकं पश्यन् - ''पूर्वजानां स्मरणार्थं मया एतत् निर्माणागारं स्थापितम् । एतत्परिसरे स्थिताः जनाः अत्र उद्योगं कृत्वा धनं सम्पादयेयुः इति मम अपेक्षा आसीत् । भवान् बालान् एव कार्ये योजयन् मम गौरवं नाशितवान् । मम अपख्यातिः कल्पिता'' इति खेदेन अवदत् ।

व्यवस्थापकः शिरः अवनमय्य स्थितः आसीत् । राजशेखरवर्यः बालान् उद्दिश्य अवदत् - ''यत् प्रवृत्तं तद्विषये अहं भवतां क्षमां प्रार्थये । अहम् आत्मानम् अपराधिनं भावयामि । गतं तु गतम् एव । अत्र ये बालाः कार्यं कृतवन्तः तेषाम् अध्ययनव्यवस्थाम् अहं करिष्यामि । भवतां निमित्तं विद्यालयस्य व्यवस्थाम् अपि करिष्यामि'' इति । सर्वेभः बालेभ्यः चाकलेहान् बिस्किट्खाद्यं च वितीर्णवान् सः ।

राजशेखरवर्यस्य कथनं श्रुत्वा बालाः सन्तुष्टाः । तेषाम् आत्मविश्वासः प्रवृद्धः ।



चीनादेशीया कथा

# युनहसिया कथं गृहं गता ?



पूर्वं 'वू दी'नामकः राजा राज्यं परिपालयति स्म । तस्य आस्थाने युनहसिया नाम काचित् दासी निवसति स्म । सा समग्रे वर्षे सर्वेषु दिनेषु कार्यं करोति स्म । कदापि विरामं न प्राप्नोति स्म सा । विरामाभावतः सा गृहं गत्वा परिवारजनैः सह किञ्चित्कालं वासं कर्तुम् अपि न शक्नोति स्म । राजभवनस्य नियमः तादृशः कठोरः आसीत् यत् तत्रत्यः उद्योगी कोऽपि कदापि बहिः गन्तुं न अर्हति स्म ।

राजभवने युनहसियायाः एकं मित्रम् आसीत् । तस्य नाम आसीत् डाङ्ग् फेङ्ग् श्यू इति । सः मन्त्रिपदे स्थितः आसीत् । तस्य राज्ञः च उत्तममैत्री आसीत् । अतः सः एकः एव राज्ञा सह मैत्र्या किमपि वक्तुं समर्थः आसीत् । युनहसिया डाङ्ग् फेङ्ग् श्यू च तदा तदा मिलित्वा वार्तालापं कुरुतः स्म । कदाचित् युनहसिया आत्मना निर्मितं 'मून्केक्' तस्मै ददाति स्म । तत् खाद्यं तस्य प्रियतमम् आसीत् ।



कदाचित् युनहसिया डाङ्गम् उक्तवती यत् अहं परिवारजनैः मेलितुम् इच्छामि इति । परिवारजनैः सह मेलितुं सा कथम् उत्तपति इति अवगतवान् डाङ्गः । 'मया एतस्याः साहाय्यं करणीयम्' इति तेन चिन्तितम् । डाङ्गः बुद्धिमान् विवेकी च आसीत् । अतः सह युनहसियायै विरामस्य दापनार्थम् एकम् उपायं चिन्तितवान् ।

सः राज्ञः समीपं गत्वा उक्तवान् - ''महाराज ! आकाशदेवः अग्निदेवम् आज्ञापितवान् अस्ति यत् एतस्य राज्यस्य प्रथमस्य चान्द्रमासस्य पञ्चदशे दिने चन्द्रोदयं पूर्णतः निवारयतु इति । अतः नववर्षारम्भस्य उत्साहः विनष्टः भविष्यति'' इति ।

''एतदर्थं किं करणीयम् अस्माभिः ?'' इति पृष्टवान् राजा ।

''अग्निदेवस्य कोपस्य निवारणार्थम्

अस्माभिः सर्वेषां सहकारः प्राप्तव्यः अस्ति । सर्वे स्वपरिवारजनैः सह मिलित्वा रक्तदीपम् आरात्रि प्रज्वाल्य स्फोटकानि स्फोटयेयुः । एतस्मात् अग्निदेवः सन्तुष्टः भविष्यति । वयं कमपि हानिं न प्राप्नुयाम'' इति उक्तवान् मन्त्री डाङ्गः ।

डाङ्गः एतदपि उक्तवान् यत् अग्निदेवाय चन्द्रखाद्यम् (मून् केक्) नैवेद्यरूपेण अर्पणीयम् इति । युनहसियया निर्मीयमाणं चन्द्रखाद्यं नितरां सुप्रसिद्धम् आसीत् । अतः तया महता प्रमाणेन तत् खाद्यं निर्मातव्यम् अभवत् । राजा आज्ञां कृतवान् यत् डाङ्गस्य कथनस्य अनुगुणं देशे सर्वत्र उत्सवस्य आचरणं करणीयम् इति ।

समग्रे राज्ये महता उत्साहेन चन्द्रखाद्यं सज्जीकृत्य दीपं प्रज्वाल्य, स्फोटकानि स्फोटयित्वा उत्सवः आचरितः । एवं सम्भाव्या हानिः निवारिता जाता । युनहसिया च गृहं गत्वा परिवारजनैः सह स्थातुं शक्ता जाता ।

राज्ञे एतत् उत्सवाचरणम् अरोचत । अतः सः आज्ञापितवान् यत् प्रतिवर्षम् एतस्मिन् दिने रक्तदीपं प्रज्वाल्य रक्तं नेयदीपं प्रज्वाल्य च उत्सवः आचरणीयः इति । एषा एव परम्परा अद्यापि अनुवर्तमाना अस्ति । एतस्मिन् दिने जनाः गृहं गत्वा परिवारजनैः सह स्थित्वा आनन्दम् अनुभवन्ति !

चीनावासिनः चान्द्रमानम् अनुसरन्ति । वर्षारम्भदिनानि कानिचन ते वसन्तऋतुनाम्ना निर्दिशन्ति । वर्षारम्भस्य विंशतिदिनेभ्यः पूर्वम् एव गृहस्य स्वच्छतां कर्तुम् उद्युक्ताः भवन्ति ते । अवकरादयः गृहात् निष्कास्यन्ते । ततः वर्णलेपनेन गृहालङ्कारः क्रियते । गृहस्य पात्राणां चाकचक्यता सम्पाद्यते । गृहजनानां सर्वेषां कृते नूतनानि वस्त्राणि क्रीयन्ते चापि ।



नववर्षात् पूर्वदिने एव गृहिण्यः समग्रं गृहं पुनरपि स्वच्छीकुर्वन्ति । 'नववर्षदिने सम्मार्जन्याः उपयोगः कृतः चेत् सौभाग्यस्य नाशः भविष्यति' इति तत्रत्याः भावयन्ति ।

पर्वसमये विविधखाद्यानां निर्माणस्य विशेषमहत्त्वं भवति । केचन अपूर्वाणि खाद्यानि आपणतः क्रीत्वा आनयन्ति । जनाः तण्डुल-



पिष्टेन 'अष्टनिध्यात्मकतण्डुल'नामकं (एट् ट्रेजर् रैस्) खाद्यं निर्मान्ति, यस्मिन् च अष्टविधानि मांसानि संयोज्यन्ते । नववर्षदिने सर्वे गृहे एव स्थातुं विशेषतः प्रयत्नं कुर्वन्ति । तं च सायङ्कालं महता वैभवेन आचरन्ति च । मातापितरः अन्ये बान्धवाः च बालेभ्यः रक्ते पिहितपत्रे धनं स्थापयित्वा यच्छन्ति ।

रात्रिसमये सर्वत्र रक्तवर्णीयाः नेयदीपाः ज्वाल्यन्ते । गृहस्य सर्वे सदस्याः स्फोटकानि स्फोटयन्ति । 'स्फोटकानां शब्दं श्रुत्वा भूत-प्रेत-पिशाचादयः दूरं गच्छन्ति' इति जनानां विश्वासः अस्ति । अनन्तरदिने जनाः बन्धूनां मित्राणां च गृहं गत्वा शुभाशंसनं कुर्वन्ति । भारते इव चीनादेशे अपि तस्मिन् दिने नूतन-वर्षस्य गणनालेखनस्य आरम्भः भवति प्रतिवर्षमपि ।

नववर्षस्य पञ्चदशे दिने नेय-दीपोत्सवः आचर्यते । चीनाजनाः विश्वसन्ति यत् एतस्यां रात्रौ नववर्षस्य पूर्णचन्द्रः दिव्यरूपं धृत्वा आकाशे दृष्टिगोचरः भवति इति । अतः ते नेयदीप-प्रकाशेन चन्द्रं पश्यन्ति । तण्डुलपिष्टेन यत् चन्द्रखाद्यं (मून्केक्) निर्मीयते तत् चन्द्रवत् एव गोलाकारकं भवति । तच्च खाद्यं पूर्णतः खादितं चेत् चन्द्रः एव खादितः इव इति ते भावयन्ति । मन्दिरेषु अपि नेयदीपाः प्रज्वाल्यन्ते । तच्च दिनं 'ड्रगन् हाल्'नाम्ना अपि आचर्यते । शत-पादपरिमितः, वर्णमयः, प्रकाशमाननेत्रेण युक्तः, नमनोन्नमनयोग्यशरीरः कश्चन महासर्पः (ड्रागन्) जनैः निर्मीयते । समग्रे नगरे विविधेषु मार्गेषु तस्य शोभायात्रा प्रचलति । जनाः विविधानि वाद्यानि वादयन्तः तम् अनुसरन्ति । एतादृशः व्यवहारः नववर्षाचरणम् उल्लासमयं करोति ।

# प्रयतन्ताम् !!

कोणे स्थितायां स्फोटकमालायाम् अग्निं योजयितुम् इच्छतः चटुलताप्रियस्य माणवकस्य साहाय्यं किं कर्तुम् अर्हन्ति भवन्तः ? मध्येमार्गं स्थितानि महास्फोटकानि स्फोटितानि यथा न स्युः तथा जागरूकता अवश्यम् आश्रयणीया ।



## किम् एतत् जानन्ति भवन्तः ?

* विक्रमसंवत्सरस्य आरम्भः दीपावलीदिने एव भवति । एषः शकः ५८ तमे क्रिस्तपूर्वाब्दे आरब्धः । दक्षिणभारतं शासितवन्तः चक्रवर्तिनः विक्रमस्य सिंहासनारोहणं निमित्तीकृत्य एतस्य शकस्य आरम्भः जातः इति इतिहासज्ञाः वदन्ति । दक्षिणभारतस्य केषुचित् प्रदेशेषु अद्यापि विक्रमशकस्य अनुसरणं क्रियते । दीपावलीदिने ते नववर्षारम्भम् आचरन्ति ।
* जैनमतसंस्थापकस्य महावीरस्य निर्वाणं दीपावलीदिने एव जातम् । जैनाः एतत् दिनं 'देव-दीपावली'नाम्ना निर्दिशन्ति । ते एतस्मिन् दिने गृहे सर्वत्र दीपान् प्रज्वाल्य मधुरवितरणं कृत्वा धार्मिकग्रन्थानां पारायणं कुर्वन्ति । देवदीपावल्याः दिने मध्यरात्रे, अनन्तरदिने प्रातः च महावीरस्य आराधनं क्रियते तैः ।
* पश्चिमबङ्गालराज्ये दीपावलीदिने एव कालीपूजा अपि प्रचलति । 'श्यामापूजा' इति नामान्तरेण अपि निर्दिश्यमानायां तस्यां पूजायां भगवत्याः दुर्गायाः रुद्ररूपम् आराध्यते ।

## दीपावली-विनोदः

द्व्यधिकजनानां कृते अत्रास्ति क्रीडा । षट्-नेत्रात्मकः अक्षः आवश्यकः अत्र । तत्र तत्र दत्ताः सूचनाः पालयन्तः क्रीडन्तु भवन्तः ।

दीपावली-शुभाशयाः

START
1
2
3
4
MISS A TURN
5
6
7
8
9
GO TO 3
10
11
12
GO TO 27
13
14
15
16
17
18
GO TO 21
19
20
21
22
23
GO TO 22
24
25
MISS A TURN
26
GO TO 20
27
28
29
30
31
32
SORRY GO TO START
33
34

# वर्णलेपनविनोदः

बालः नचिकेताः मृत्युदेवं यमम् एव द्रष्टुं गत्वा यमेन सह मृत्युरहस्यविषये सम्भाषणं कृतवान् । एतच्च सम्भाषणं दीपावलीदिने एव प्रवृत्तम् इति श्रूयते । तयोः सम्भाषणं सूचयत् अधस्तनचित्रं वर्णैः अलङ्कुर्वन्तु, येन चित्रशोभा वर्धेत ।



## ५६. भीमेन कृतम् आक्रमणम्

# महाभारतम्

पाण्डवानां विषये धृतराष्ट्रः यत् पृष्टवान् तस्य उत्तररूपेण सञ्जयः उक्तवान् - "राजन् ! पाण्डवाः यन्त्रतन्त्रशक्तिमन्तः तु सर्वथा न । ते युद्धे स्वशक्तिं परिचाययन्तः सन्ति, तावदेव । तेषां सद्व्यवहारः एव तान् विजयिनः करोति । भवतः पुत्राः तु दुष्कृत्यानि कृतवन्तः । तानि एव विषवृक्षायमानानि तान् मारयन्ति । भवन्तं कियन्तः जनाः हितं न बोधितवन्तः ? किं भवता तेषां वचनं पालितम् ? विदुरः, भीष्मः, द्रोणः इत्यादयः, अहं च भवन्तं विवेकं बोधयितुं प्रयत्नं कृतवन्तः । किन्तु अस्माकं वचनानि भवते न अरोचन्त । भवता अहं यथा पृष्टः तथैव दुर्योधनेन अपि भीष्मः पृष्टः अस्ति" इति ।

अनन्तरं सः भीष्म-दुर्योधनयोः वार्तालापं विवृतवान् -

दुर्योधनः भीष्मम् अपृच्छत् - "भवान्, द्रोणः, कृपाचार्यः, अन्ये महारथिनः च प्राणान् पणीकृत्य अस्मत्पक्षस्य जयार्थं युद्धं कुर्वन्तः सन्ति । तथापि पाण्डवानां पुरतः भवतां सामर्थ्यं कान्तिहीनम् इव दृश्यते । एतस्य किं कारणम् ?" इति ।

तदा भीष्मः अवदत् - "वत्स ! मया एतस्य कारणम् इतः पूर्वम् एव बहुवारम्





उक्तम् । एवं स्थिते अपि पुनः वदामि, शृणोतु । कृष्णः पाण्डवानां सहायकत्वेन यावत् तिष्ठति तावत् तान् जेतुं कोऽपि न शक्नोति । पाण्डवैः सह सन्धिः एव उचितः मार्गः । सन्धिः कृतः चेदेव भवान् अनुजैः सह सुखेन स्थातुम् अर्हति'' इति ।

एतदनन्तरं सः विश्वोपाख्यानं श्रावितवान् -

''पूर्वं कदाचित् ब्रह्मा गन्धमादनपर्वते उपविष्टः आसीत् । देवताः ऋषयः च तं परितः स्थिताः आसन् । तत्काले तैः आकाशे गच्छत् एकं प्रकाशमानं विमानं दृष्टम् । ब्रह्मा तत् दृष्ट्वा हस्तौ योजयित्वा ध्यानम् अकरोत् । एतत् दृष्ट्वा देवाः ऋषयः चापि उत्थाय नमस्कारं कृतवन्तः ।

ब्रह्मा विमानस्थं स्तुवन् प्रार्थयत् - ''हे देव ! भवान् स्वस्य अंशं भूलोकं सम्प्रेष्य यदुवंशे जन्म कारयित्वा एतस्य जगतः कल्याणं साधयतु'' इति ।

''भवतः आशयः मया अवगतः । अतः तदनुगुणम् एव करिष्यामि'' इति उक्तवान् विमानस्थः । ततः विमानम् अदृश्यताम् अगच्छत् । तदा देवाः ऋषयः च ब्रह्माणम् अपृच्छन् - ''पितामह ! भवता कः प्रार्थितः ? किमर्थं तथा प्रार्थितः ?'' इति ।

ब्रह्मा अवदत् - ''विमाने भगवान् विष्णुः आसीत् । सः एव प्रार्थितः मया । दैत्याः, दानवाः, राक्षसाः च इदानीं भूलोके जन्म प्राप्तवन्तः सन्ति । तेषां वधार्थं नर-नारायणाभ्यां भूलोके अवतारः प्राप्तव्यः अस्ति । ताभ्यां सह केचन देवाः अपि भूलोके जन्म प्राप्नुयुः । तान् जेतुं कोऽपि न शक्नोति । किन्तु मानवेषु केचन एतत् तथ्यम् अजानन्तः तान् जेतुं व्यर्थप्रयत्नं करिष्यन्ति'' इति ।

भीष्मः एतां कथां श्रावयित्वा दुर्योधनम् अवदत् - ''भवान् राक्षसांशेन युक्तः स्यात् । अतः एव भवता कृष्णार्जुनयोः वैरं सम्पादितम् अस्ति इति भाति'' इति । एतदनन्तरं सर्वे स्व-स्व-शिबिरं गत्वा विश्रान्तिं स्वीकृतवन्तः ।

युद्धस्य पञ्चमं दिनम् आरब्धम् । उभय-पक्षीयाः अपि सेनाव्यूहं रचयित्वा युद्धार्थं सज्जाः जाताः । कौरवैः मकरव्यूहः रचितः आसीत् । पाण्डवैश्च श्येनव्यूहः । पाण्डवानां व्यूहस्य अग्रभागे भीमः, शिखण्डी, धृष्टद्युम्नः च स्थिताः आसन् । तेषां पृष्ठतः सात्यकिः अर्जुनश्च स्थितौ आस्ताम् ।

युद्धक्षेत्रे दुर्योधनः द्रोणम् अवदत् -

''आचार्य ! अद्य भवता पाण्डवानां वधः करणीयः'' इति । एतत् वचनं श्रुत्वा द्रोणः आवेशं प्राप्य सात्यकिं सम्मुखीकृतवान् । सात्यकेः साहाय्यार्थं भीमः उपस्थितः । तदा द्रोणस्य साहाय्यार्थं भीष्मः शल्यः च उपस्थितौ जातौ । भीष्मद्रोणयोः प्राबल्यं दृष्ट्वा अभिमन्युः, उपपाण्डवाः, शिखण्डी च अग्रे आगतवन्तः । भीष्मः शिखण्डिना सह युद्धं निराकृत्य पार्श्वं गतवान् । तदा द्रोणः शिखण्डिना सह युद्धम् आरब्धवान् । उभयोः अपि घोरं युद्धं प्रवृत्तम् । तयोः सह आगताः वीराः अपि शौर्येण युद्धं कृतवन्तः । एतस्य परिणामतः उभयपक्षे अपि असङ्ख्याः सैनिकाः प्राणैः वियुक्ताः जाताः ।



पञ्चमे दिने यत् युद्धं प्रवृत्तं तस्य प्रमुखघटनाः नाम - अश्वत्थामार्जुनयोः युद्धम् । एतस्मिन् युद्धे अर्जुनः अश्वत्थाम्नः कवच-बाणादीन् खण्डितवान् । तथापि अश्वत्थामा अविचलः सन् शौर्येण युद्धम् अकरोत् । 'गुरुपुत्रस्य एतस्य वधः मया न करणीयः' इति विचिन्त्य अर्जुनः अश्वत्थाम्नः वधविचारं परित्यक्तवान् । अन्यैः वीरैः सह युद्धार्थम् अन्यत्र गतवान् च । एतस्मिन् दिने भीम-दुर्योधनयोः अपि घोरं युद्धं प्रवृत्तम् ।

तस्मिन् दिने सात्यकेः पराक्रमः विशेषतः व्यराजत । तस्य बधार्थं दुर्योधनः अनेकान् रथान् प्रेषितवान् । सात्यकिः स्वीयैः अस्त्रैः तान् रथस्थान् सम्यक् अपीडयत् । रथिनां नायकेन भूरिश्रवसा सह सः युद्धम् आरब्धवान् । भूरिश्रवाः कश्चन महारथः । तस्य युद्धकौशलं दृष्ट्वा सात्यकिसहायकाः सर्वे योद्धारः दिग्भ्रान्ताः । तावता सात्यकेः पुत्राः अग्रे आगत्य भूरिश्रवसं परितः स्थित्वा युद्धम् आरब्धवन्तः । किन्तु भूरिश्रवसः बाणैः प्रहृताः सन्तः ते अल्पे एव काले व्रणिताः सञ्जाताः । पुत्राणां दुरवस्थां दृष्टवतः सात्यकेः कोपः प्रवृद्धः । अतः सः भूरिश्रवसा सह पुनरपि युद्धम् आरब्धवान् । तत्र उभयोः अपि रथः भग्नः । तदा उभौ अपि भूमौ स्थित्वा खड्गेन युद्धं कृतवन्तौ । तयोः घोरं युद्धं दीर्घकालं यावत् प्रवृत्तम् । अत्रान्तरे भीमः आगत्य सात्यकिं स्वस्य रथे उपवेशितवान् । दुर्योधनः अपि अग्रे आगत्य भूरिश्रवसं स्वरथे उपवेशितवान् ।

सूर्यास्तः यावत् आसन्नः तावता उभय-पक्षीयम् अपि सैन्यं नितरां परिश्रान्तम्



आसीत् । अतः सर्वे युद्धं स्थगयित्वा स्वशिबिरं गतवन्तः ।

षष्ठे दिने प्रातः पुनरपि युद्धम् अनुवृत्तम् । एतदवसरे पाण्डवाः मकरव्यूहम् अरचयन् । कौरवाः च क्रौञ्चव्यूहं रचितवन्तः । किन्तु उभौ अपि व्यूहौ दीर्घकालं न स्थितौ । आदौ एव भीमद्रोणयोः मध्ये युद्धम् आरब्धम् । द्रोणः बाणवर्षणेन भीमं सम्यक् अपीडयत् । एतस्मात् कुपितः भीमः द्रोणस्य सारथिम् अमारयत् । तथापि द्रोणः रथं स्वयं चालयन् पाण्डवसेनाम् अस्तव्यस्ताम् अकरोत् । एतदवसरे द्रोणः तस्य साहाय्यम् अकरोत् । एवम् एव भीमार्जुनौ सम्भूय कौरवसेनाव्यूहं भञ्जयित्वा ताम् अस्तव्यस्ताम् अकुरुताम् । यथा यथा कालः गतः तथा तथा युद्धस्य तीव्रता सर्वत्र प्रसृता ।

भीमः भीष्मस्य उपस्थितिम् अपि अपरिगणय्य 'धृतराष्ट्रपुत्राणां वधः अद्य मया करणीयः एव' इति निश्चित्य एकाकी एव कौरवसेनां हठात् प्रविष्टवान् । धृतराष्ट्रपुत्राः भीमं सजीवं ग्रहीतुं प्रयासं कृतवन्तः । एतत् ज्ञातवान् भीमः रथात् अवतीर्य गदां गृहीत्वा कौरवसेनानाशनम् आरब्धवान् ।

द्रोणेन सह युद्धं कुर्वन् स्थितः धृष्टद्युम्नः दूरात् एव भीमस्य रथं दृष्टवान् । रथे तेन भीमः न दृष्टः । अतः सः द्रोणेन सह क्रियमाणं युद्धं परित्यज्य भीमस्य रथस्य समीपम् आगत्य सारथिं पृष्टवान् - ''भीमः कुत्र गतः ?'' इति ।

तदा सारथिः अवदत् - ''अत्रैव तिष्ठतु इति माम् आदिश्य भीमः एकाकी कौरवसेनां प्रविष्टवान् अस्ति'' इति । 'एवं तर्हि भीमः सङ्कटे पतितः स्यात् कदाचित्' इति विचिन्त्य धृष्टद्युम्नः भीमेन गतां दिशम् अनुसृतवान् । गमनमार्गे विरोधम् उत्पादयतः गजान् सैनिकान् च संहरन् भीमः तेन दूरे दृष्टः । कौरववीराः भीमं परितः स्थित्वा बाणवर्षणं कुर्वन्तः आसन् । यदा धृष्टद्युम्नः भीमसमीपं गतवान् तदा भीमस्य शरीरतः रक्तधारा प्रवहति स्म । सः मृत्युदेवः इव दृश्यते स्म । धृष्टद्युम्नः झटिति तं स्वरथे उपवेशितवान् । तस्य शरीरे लग्नान् बाणान् सर्वान् अपनीय तं प्रेम्णा आलिङ्गितवान् च ।

अत्रान्तरे धृतराष्ट्रपुत्राः भीमं धृष्टद्युम्नं च युगपत् एव मारयितुम् इच्छन्तः तयोः उपरि आक्रमणं कृतवन्तः । निरन्तरं बाणप्रहारं प्राप्य

अपि धृष्टद्युम्नः विचलितः न जातः । सः सम्मोहनास्त्रेण सर्वान् विसंज्ञान् कृतवान् । अत्रान्तरे तत्र उपस्थितः द्रोणः प्रज्ञास्त्रप्रयोगं कृत्वा विसंज्ञान् सर्वान् सचेतनान् कृतवान् ।

रणरङ्गे कुत्रचिदपि भीमं धृष्टद्यम्नं च अदृष्ट्वा युधिष्ठिरः चिन्ताक्रान्तः जातः । सः तयोः अन्वेषणार्थं साहाय्यार्थं च अभिमन्युप्रभृतीन् द्वादश योधान् प्रेषितवान् । तान् समीपम् आगतान् दृष्टवतोः भीम-धृष्टद्युम्नयोः उत्साहः प्रवृद्धः । तत्काले एव द्रोणस्य बाणानां प्रहारं प्राप्य धावन् पिता द्रुपदः धृष्टद्युम्नेन दृष्टः । अतः सः द्रोणेन सह युद्धम् आरब्धवान् । एतस्मिन् युद्धे तदीयः सारथिः मृतः । रथश्च भग्नः । सः वेगेन गत्वा अभिमन्योः रथम् आरुह्य युद्धम् अनुवर्तितवान् । द्रोणेन क्रियमाणं पाण्डवसेनानाशं दृष्ट्वा अपि भीमधृष्टद्युम्नौ द्रोणं निग्रहीतुं न शक्तौ । द्रोणस्य पराक्रमं दृष्ट्वा उभयपक्षीया सेना अपि तदीयप्रशंसाम् अकरोत् ।

'भीमः निग्रहीतव्यः एव' इत्येषः विचारः पुनरपि दुर्योधनादीनां मनसि आगतः । किन्तु युधिष्ठिरेण प्रेषिताः अभिमन्युप्रभृतयः महावीराः तेषां प्रयत्नं व्यर्थीकृतवन्तः । 'समीपम् आगताः अपि दुर्योधनादयः मया न मारिताः' इति खेदम् अनुभूतवान् भीमः ।

युद्धक्षेत्रस्य दक्षिणे भागे अर्जुनः एकाकितया एव युद्धं कुर्वन् शत्रुसेनां नाशयन् आसीत् । सूर्यः यदा अस्ताचलाभिमुखः जातः तदा पुनरपि दुर्योधनस्य मनसि विचारः आगतः यत् भीमः कथमपि ग्रहीतव्यः एव इति । अतः सः भीमाभिमुखं प्रस्थितवान् । भीमः तस्य छत्रं ध्वजं च नाशितवान् । तदा दुर्योधनः कृपाचार्यस्य रथे आश्रयं प्राप्तवान् । एतत्सर्वं यदा प्रचलत् आसीत् तदा उपपाण्डवाभिमन्युधृष्टद्युम्नादयः धृतराष्ट्रपुत्रैः सह युद्धं कुर्वन्तः आसन् । एतस्मिन् भयङ्करयुद्धे कदुष्कर्णः



नाम वीरः मरणं प्राप्तवान् ।

अल्पे एव काले सूर्यास्तः जातः । उभयपक्षीयसेनायाम् अपि विरामापेक्षा उत्पन्ना । युद्धं स्थगयित्वा दुर्योधनः स्वशिबिरं प्रतिगतवान् । किञ्चित्कालं विश्रान्तिसुखम् अनुभूय दुर्योधनः भीष्मम् अवदत् - ''आर्य ! वयं अभेद्यान् व्यूहान् बहुधा रचितवन्तः । तथापि पाण्डवाः तान् लीलया भञ्जितवन्तः । अद्य तु भीमः अस्माकं व्यूहरचनां नाशयित्वा अस्मत्सेनां प्रविश्य मां बहुधा पीडितवान् । तस्य भयङ्करी आकृतिः मूर्च्छाजनिका अस्ति । मम मनः अनिष्टम् आशङ्कते । भवतः अनुग्रहः यदि स्यात् तर्हि एव अहं पाण्डवान् जेतुं शक्नुयाम्'' इति ।

तदा भीष्मः अवदत् - ''वत्स ! भवतः विजयः भवेत् इत्येव खलु अहं मम सामर्थ्यं पूर्णतः उपयुज्य युद्धं कुर्वन् अस्मि ? अहं शरीरेण भवत्पक्षीयः भूत्वा मनसा अन्यपक्षीयः भवितुं न अर्हामि । तथापि पाण्डवपक्षस्य सामर्थ्यातिशयः मया अङ्गीकरणीयः एव । पाण्डवपक्षीयाः योद्धारः महाशूराः, अतिरथ-महारथाः, रणनिपुणाः च सन्ति । पूर्णेन मनसा युद्धं कुर्वन्ति ते । अतः तेषां पराजयः सर्वथा अशक्यः । एतत्सर्वं जानन् अपि प्राणान् पणीकृत्य भवत्पक्षस्य जयार्थं युद्धं कुर्वन् अस्मि । भवतः निमित्तं त्रिलोकीम् अपि भस्मसात्कर्तुं सिद्धोऽस्मि अहम्'' इति ।

एतानि वचनानि श्रुत्वा दुर्योधनः सन्तुष्टः जातः ।

भीष्मः किञ्चित्कालं विचिन्त्य दुर्योधनं पुनः अवदत् - ''भवतः जयार्थं यथा अहं, तथैव द्रोणः, शल्यः, कृतवर्मा, अश्वत्थामा, सोमदत्तः, सैन्धवः, विन्दानुविन्दौ, बाह्लीकः, बृहद्बलः, चित्रसेनः इत्यादयः महावीराः, महती रथसेना, गजसेना, अश्वसेना चापि सन्नद्धाः सन्ति । अस्माकं सर्वेषाम् अपि शक्तिः देवसैन्यम् अपि जेतुं समर्था । तथापि भवतः हितं मनसि निधाय अहं किञ्चित् वदामि । समग्रया देवसेनया सह आगत्य देवेन्द्रः एव युद्धं करोति चेदपि पाण्डवानां पराजयः न सम्भविष्यति । अतः पाण्डवाः अस्माभिः जिताः स्युः इति चिन्तनम् एव सर्वथा अवास्तविकम्'' इति ।

एतदनन्तरं सः दुर्योधनस्य शरीरे जातानां व्रणानाम् उपशमनार्थं विशल्यकरणीनामकम् औषधं तस्मै दत्तवान् ।




THE AMUL CHEESE BOY
IN PICNIC PANIC


One bright sunny day...


...a picnic is in progress.


Little Munnu Verma crawls away.
GURGLE


Suddenly, huge rocks come tumbling down the mountain.
RUMBLE


Amul cheese boy eats an Amul cheese slice...


...and becomes strong and powerful.


He smashes the falling rocks...
BANG


...reducing them to small pieces.
CRACK


Munnu is rescued and back with his family.


All thanks to the cheese that has more milk in it.


Amul cheese slices.
Amul cheese. Yes please!
Amul




*[तृतीया सालभञ्जिका कथाम् आरब्धवती । सुभद्रदेशस्य राजा न्यायवर्धनः न्यायप्रियत्वेन सुविख्यातः । न्यायं प्राप्तुं वीरः चन्द्रः च तस्य आस्थानम् आगतौ । चन्द्रः धनिकः, वीरश्च निर्धनः । वीरः उक्तवान् यत् धनिकत्वं प्राप्तवान् एषः चन्द्रः निर्धनकुलीयाय मत्पुत्राय स्वपुत्र्याः दानं निराकुर्वन् अस्ति, यश्च विवाहः तयोः बाल्यकाले एव निर्णीतः आसीत् इति । एतत् निराकुर्वन् चन्द्रः उक्तवान् यत् पुत्र्याः दानस्य निराकरणे धनिकनिर्धनभेदः न कारणं, प्रत्युत वीरकुटुम्बस्य आलस्यप्रवृत्तिः कारणम् इति । अपरः न्यायार्थी सिंहद्वीपीयः वणिक् मणिकर्णः रत्नगुप्तम् अङ्गुल्या दर्शयन् उक्तवान् यत् एषः रत्नगुप्तः मां वाणिज्यव्यवहारे वञ्चितवान् इति । तदनन्तरम्......]*

महाराजः मणिकर्णस्य कथनं सावधानं श्रुतवान् । अनन्तरं सः रत्नगुप्तं प्रश्नार्थकदृष्ट्या दृष्टवान् ।

रत्नगुप्तः झटिति उत्थाय महाराजं सविनयं प्रणम्य - ''महाराज ! अहं नूतनः तु न । गतेभ्यः त्रिंशद्वर्षेभ्यः वञ्चनां विना वाणिज्यं कुर्वन् अस्मि । मम व्यवहारपरिशुद्धतां तत्रभवान्, नगरस्य अन्ये वणिजश्च जानन्ति एव । वाणिज्येन मया कियत् सम्पादितम् इत्यपि भवान् जानाति । अद्यावधि मया वाणिज्यव्यवहारे अपवादः एकोऽपि न प्राप्तः । केनापि दोषारोपणेन अहं न्यायालयं न आनीतः अपि । किन्तु अयम् अद्य मयि दोषम् आरोप्य मां न्यायालयं प्रति आनीतवान् । एतेन यत् दोषारोपणं कृतं तादृशं कार्यं मया किमर्थं वा क्रियेत ? एतस्मै



चत्वारिंशत्सहस्त्रं रूप्यकाणि दत्त्वा एव मया वस्तूनि स्वीकृतानि । एषा वस्तुस्थितिः । इतोऽप्यधिकं किम् अहं वदानि ? कश्चन विदेशीयः वणिक् मयि वञ्चकत्वम् आरोप्य मम सच्चारित्र्यं कलङ्कितं कृतवान् । इतोऽपि अधिकम् अपमाननं किम् अन्यत् स्यात् मम ?'' इति गद्गदः सन् अश्रुपूर्णनेत्रः उक्तवान् ।

न्यायवर्धनः मन्दहासपूर्वकम् उक्तवान् - ''रत्नगुप्तवर्य ! भगवान् कृष्णः एव नवनीत-चोरत्वेन निर्दिष्टः । एवं स्थिते मानवानाम् अस्माकं का कथा ? क्वचित् भगवतः लीला अस्मान् नर्तयति । तदस्तु, भवदुत्तराधिकारी, भवतः एकमात्रपुत्रः सकुशलः खलु ?'' इति ।

''सः कुशली अस्ति महाराज !'' इति शिरः अवनमय्य एव मन्दस्वरेण उक्तवान् रत्नगुप्तः ।

तदा राजा - ''रत्नगुप्तवर्य ! सभासदां पुरतः भवान् दोषारोपणस्य विषयीकृतः यत् तत् विस्मरतु । एकान्ते उपविश्य निर्मलेन मनसा भगवतः ध्यायं करोतु । भगवान् तु सर्वव्यापी । सः अपि यथा न जानीयात् तथा तु कोऽपि किमपि कर्तुं न अर्हति । अतः अलं चिन्तया'' इति उक्त्वा सैनिकान् आज्ञापितवान् यत् एतं रत्नगुप्तवर्यम् अन्तः नयन्तु इति ।

ततः सः मणिकर्णम् उक्तवान् - ''मणि-कर्ण ! रत्नगुप्तः एतस्मिन् नगरे स्थितेषु प्रमुखजनेषु अन्यतमः । भवान् तस्य पुत्र-तुल्यः । व्यर्थचिन्तया अलम् । किञ्चित्कालम् उपविशतु तावत्'' इति ।

राज्ञः आदेशं श्रुत्वा विना वचनम् आसनात् उत्थितः रत्नगुप्तः सैनिकान् अनुसृतवान् । 'राज्ञः निर्णयः कीदृशः स्यात्' इति मणिकर्णेन अपि न अवगतम् । निर्णय-श्रवणे विशेषकुतूहलम् आसीत् तस्य । सः आसने उपविष्टवान् ।

राजा तृतीयम् अभियोगिनम् आहूतवान् । कस्याश्चित् वृद्धायाः मातुः, तत्पुत्रस्य च मध्ये कलहः प्रवर्तमानः आसीत् । राजधानीतः सुदूरे तौ वसतः स्म । अभियोगी पुत्रः आदौ उक्तवान् - ''महाप्रभो ! मम पत्नी गृहकार्येषु अकुशला इति अहम् अङ्गीकरोमि । मुग्धा सा । किं कार्यं कथं करणीयम् इति बोधितं चेत् सा उत्तमतया स्वकर्तव्यं निर्वहति । न

वञ्चनां जानाति, न कपटताम् । कोपादिकं कदापि न करोति सा । किन्तु एषा वृद्धां तां सदा निन्दति । अवाच्यैः निन्दावचनैः तां निरन्तरं पीडयति एषा । प्रीतिं तु कदापि न प्रदर्शयति । दिने एकवारं वा कोपेन तां ताडयति अपि । तथापि मम पत्नी रुदती मौनम् अवलम्बते । 'भवती एवम् एव करोति चेत् कस्याश्चित् मुग्धायाः मारणात् नरकं प्राप्नुयात् । अतः एतां दुष्प्रवृत्तिं त्यजतु' इति एताम् अहं सर्वदा वदामि । किन्तु एषा तत् न शृणोति । गृहस्य एतं कोलाहलं सोढुम् अशक्नुवन् अहं पत्न्या सह गृहान्तरे वासं कर्तुम् इष्टवान् । किन्तु एषा प्रतिज्ञां कृतवती यत् यदि भवन्तौ गृहात् बहिः पदं स्थापयतः तर्हि अहम् आत्महत्यां करिष्यामि इति । एतावत् उक्त्वा सा कूपभित्तेः उपरि उपविष्टवती । अहं ग्रामाधिकारिणं सर्वम् उक्त्वा तं गृहसमीपम् आनीतवान् । सः ग्रामाधिकारी मधुरवचनैः सान्त्वयित्वा एताम् आत्महत्याप्रयत्नतः निवार्य अत्र प्रेषितवान्'' इति ।

तदा उच्चस्वरेण वृद्धा उक्तवती - ''श्वश्रूः अहं मम स्नुषां तर्जयामि चेत् को दोषः तत्र ? तथा करणे मम अधिकारः अस्ति एव । गृहे यत् प्रवर्तते तन्निमित्तम् अत्र आगमनस्य किम् औचित्यम् ? मां पीडयितुं कृतः उपायः एषः । सा ताटका एव एतम् एतदर्थं प्रेरितवती स्यात् । यत्किमपि भवतु, यदि एषः माम् एकाकिनीं परित्यज्य गृहात् निर्गच्छेत् तर्हि कूपे पतनेन अहम् आत्महत्यां कुर्याम् एव'' इति ।

एतत् श्रुत्वा राजा उभौ सैनिकौ आहूय - ''भवन्तौ एतां वृद्धां रज्ज्वा बद्ध्वा श्मशान-पार्श्वस्थे कूपे क्षिपताम् । एषा आक्रोशनं





यथा न कुर्यात् तथा मुखं वस्त्रेण बध्नीताम्'' इति आज्ञापितवान् ।

राजाज्ञां श्रुत्वा वृद्धा तत्पुत्रः च आश्चर्यचकितौ । वृद्धा झटिति परिस्थितिम् अवगत्य बन्धनार्थम् आगताभ्यां सैनिकाभ्याम् आत्मानं रक्षितुम् इतस्ततः धावन्ती - ''हा हन्त ! कोऽयं न्यायनिर्णयक्रमः ? वृद्धां मां कूपे क्षेप्तुम् इच्छति खलु अयं राजा ! एतादृशः मूर्खः राजा मया अन्यत्र कुत्रापि न दृष्टः । धिक् एतम्'' इति वदन्ती उच्चस्वरेण निन्दितवती ।

राजभटाः अल्पप्रयासेन एव तां गृहीत्वा तस्याः हस्तौ रज्ज्वा बद्धवन्तौ । तदा राजा आज्ञापितवान् - 'एतां मत्समीपम् आनयन्तु' इति । भटाः तथैव कृतवन्तः ।

राजा ताम् अवदत् - ''अये अविवेकिनि वृद्धे ! 'कूपे पतिष्यामि' इति वदन्ती भाययन्ती आसीत् खलु भवती ? एतादृशीं भवतीम् अहं कूपे पातयिष्यामि चेत् को दोषः ? पतनार्थं यः प्रयासः भवत्या करणीयः तस्य आवश्यकता न भवति खलु ? अतः किमर्थं भीतिः ? अन्यच्च, महाराजम् अपि मां मूर्खम् उक्तवती खलु भवती ? एतस्य अपराधस्य निमित्तम् एषोऽहं मकरमये कासारे भवतीं पातयिष्यामि'' इति ।

ततः सः सेवकान् आज्ञापितवान् यत् एतां वृद्धाम् इतः नीत्वा मकरमये कासारे क्षिपन्तु इति ।

यथा उक्तं तथा राजा करिष्यति एव इति अवगतवती सा वृद्धा भीत्या कम्पनं प्राप्तवती । मरणसम्भावना एव तस्याः व्यवहारे मार्दवम् अजनयत् । सा रुदती - ''महाराज ! क्षन्तव्या अहम् । मया दोषः कृतः । मया भवान् निन्दितः । मां मा मारयतु कृपया । इतः परं कदापि स्नुषां न निन्दिष्यामि, ताडयिष्यामि वा । 'आत्महत्यां करिष्यामि' इति भायनम् अपि न करिष्यामि । मां क्षाम्यन्तु कृपया'' इति प्रार्थितवती ।

''एवम् ! किन्तु क्षणिकं पश्चात्तापं ये प्रदर्शयन्ति तेषु मम विश्वासः सर्वथा नास्ति । भवती दण्डनात् मुक्ता भवितुं न अर्हति'' इति उक्त्वा भटान् सः आज्ञापितवान् - 'एतां कारागारे स्थापयन्तु' इति । ततः सः अधिकारिणः आहूय उक्तवान् - ''एतस्यै दिने एकवारम् एव भोजनं दातव्यम् । प्रतिदिनं चतुर्भिः कशाप्रहारैः एषा दण्डनीया अपि ।

यदि कदाचित् कूपपतनादिकम् एषा उच्चारयेत् तर्हि विना पुनश्चिन्तनं कूपे क्षिपन्तु एताम्'' इति ।

विरोधं कुर्वतीं वृद्धां सैनिकाः बलात् ततः नीतवन्तः । मातुः एताम् अवस्थां दृष्ट्वा पुत्रस्य नेत्रयोः अश्रूणि निर्गतानि । सः महाराजं दैन्येन अपृच्छत् - ''महाप्रभो ! किं मम माता वस्तुतः अपि मकरमये कूपे क्षिप्यते ?'' इति ।

तदा राजा हसन् अवदत् - ''तादृशी आवश्यकता न भविष्यति । तथा न करिष्यते अपि । अविवेकिनः हितवचनैः समीकर्तुं न शक्याः । सा दिनद्वयं कारागारे तिष्ठतु नाम । तदा एव विवेकः प्राप्येत । भवन्तौ दिनद्वयम् अतिथिगृहे वसताम् । ततः मात्रा सहैव प्रतिगन्तुम् अर्हतः । यदि अग्रे कदाचित् एषा पुनः पुच्छं प्रसारयेत् तर्हि मां झटिति सूचयन्तु'' इति ।

एतत् श्रुत्वा वृद्धायाः पुत्रः सन्तुष्टः । सः महाराजं पुनः पुनः विनयेन प्रणम्य ततः निर्गतवान् ।

एतदनन्तरं राजा वीरम् आहूय कोमल-स्वरेण अपृच्छत् - ''वीर ! एतावता भवतः उद्वेगः शान्तः स्यात् इति अहं भावयामि । अतः सम्यक् विचिन्त्य कथयतु । चन्द्रस्य गृहस्य मितव्ययता, सुखसम्पन्नता, स्वगृहस्य अशान्तता, निर्धनता च किं भवन्तं कदाचित् वा अबाधत ? किम् आत्मनः व्यवहारविषये कदापि खेदः भवतः मनसि न उत्पन्नः ?'' इति ।

महाराजस्य वचनं कोमलतायुक्तम् अपि



तीक्ष्णतासहितम् इति ज्ञातवान् वीरः । अतः सः विनयेन अवदत् - ''कदाचित् न महाप्रभो, बहुवारं माम् अबाधत । शतवारं मया खेदः अनुभूतः । पत्नीपुत्रादयः मया तर्जिताः अपि । तथापि ....''

''वस्तुस्थितिः इदानीं या काऽपि स्यात् नाम । चन्द्रेण यत् उक्तं तत् तु अङ्गीक्रियते खलु भवता ? 'चन्द्रः भवत्पुत्राय स्वपुत्र्याः दानं निराकृतवान् यत् तस्य कारणं न भवतः निर्धनता, अपि तु भवत्परिवारजनानां जीवन-शैली एव' इत्यपि भवता अङ्गीक्रियते एव ननु ?'' इति गम्भीरस्वरेण वीरम् अपृच्छत् महाराजः ।

अनन्यगतिकः वीरः शिरश्चश्चालनपूर्वकम् अङ्गीकारं सूचितवान् । राजा तं पुनः कठोरता-



मिश्रितस्वरेण अवदत् - ''भवत्परिवार-सदस्याः अलसाः । आलस्यं परित्यक्तुं न शक्तं भवद्भिः । परिश्रमकरणे, तद्द्वारा जीवनस्य प्रगतिसम्पादने वा कदापि मतिः एव न कृता भवद्भिः । एवं स्थिते अपि 'समग्रः दोषः चन्द्रस्य एव' इति चिन्तनं भवताम् । एवं ननु ? किम् एतत् उचितम् ?'' इति ।

वीरस्य नेत्राभ्याम् अश्रूणि निर्गतानि । सः महाराजम् अवदत् - ''महाप्रभो ! भवता उक्ते मिथ्यांशः न कोऽपि । मम पत्नी सर्वथा अलसा । तां निग्रहीतुम् अहम् असमर्थः आसम्'' इति ।

''वीर ! किं पत्न्याः निन्दनेन ? भवतः विवेकः यदि स्यात् तर्हि भवान् तस्याः तालानुगुणं नृत्यं न अकरिष्यत् । पत्नीप्रेम्णा अन्धः जातः भवान् स्वस्य व्यवहारस्यापि दोषं न अवगतवान् । तदस्तु तावत्, सप्ताहात्मकः अवधिः दीयते मया । तदभ्यन्तरे भवता पत्नीपुत्रैः सह अत्र पुनरपि उपस्थातव्यम् । अत्रत्याः अध्यापकाः, वृत्तिशिक्षकाः च भवतः पुत्राणां सामर्थ्य-बुद्धिमत्तादिकं परीक्ष्य यथायोग्यं शिक्षणं चिन्तयिष्यन्ति । अतः भवत्पुत्राणां जीवनस्य परिष्कारं वयं चिन्तयिष्यामः । एतदर्थं भवता वार्षिकस्य आयस्य अर्धभागः ग्रामाधिकारिणे दातव्यः । आये एव अविद्यमाने अर्धभाग-दानस्य का प्रसक्तिः इति न चिन्तनीयं भवता । ग्रामाधिकारिणम् उक्त्वा कृषिभूमिं भवते दापयिष्यामि । भवता भवत्पत्न्या च तत्र श्रमेण श्रद्धया च कार्यं कृत्वा सस्यसमृद्धिः सम्पादनीया । ततः प्राप्तस्य अर्धभागः भवते, अवशिष्टार्धं तु सर्वकाराय'' इति सूचितवान् महाराजः ।

अनन्तरं सः चन्द्रम् अवदत् - ''चन्द्र ! भवतः पुत्र्याः विवाहः भवतः निर्णयम् अवलम्बते ननु ? विवाहनिर्णयविषये भवता पुनः चिन्तनीयम् । वीरः भवतः आप्तमित्रम् । यदि तदीयं जीवनम् ऋजुमार्गे गच्छत् नास्ति तर्हि तस्य परिष्कारार्थं, साहाय्यार्थं वा प्रयत्नः भवतः कर्तव्यम् । यदि एतत् कर्तव्यं भवान् कायेन वाचा मनसा च कुर्यात् तर्हि वीरस्य जीवनं परिष्कृतं भवेत् । यदि तदीयं जीवनं परिष्कृतं भवेत् तर्हि उभयपरिवारयोः सम्बन्धः अपि उत्तमः स्यात् । पुत्री दीयते इति यत् वचनं दत्तं तस्य पालनर्थं भवता यावच्छक्ति

प्रयासः करणीयः एव । प्रयत्नेन सर्वम् अपि साधयितुं शक्यते एव । यदि भवान् साहाय्यं कुर्यात् तर्हि वीरः निश्चयेन सन्मार्गगामी भवेत् । तदा भवता एकस्य परिवारस्य उद्धारः कृतः स्यात् । मम आशयः भवता अवगतः इति अहं चिन्तयामि'' इति ।

तदा चन्द्रः करौ योजयित्वा अवदत् - ''प्रभो, भवता यथा आदिष्टं तथैव करिष्यामि । वयं वीरं दुर्बलम् अयोग्यं च चिन्तितवन्तः । प्रयोजनकारी न भवति एषः इति निर्णीतवन्तः । अतः एव अस्माभिः एतस्मिन् उपेक्षा प्रदर्शिता । एषः अस्माकं दोषः । इतः परं वयं तं स्वपरिवारीयं भावयामः । तस्य सर्वविधसाहाय्यं कृत्वा तं स्वावलम्बिनं सन्मार्गगामिनं च करिष्यामः'' इति ।

अनन्तरं तौ राजानं पुनरपि प्रणम्य ततः निर्गतवन्तौ ।

एतदनन्तरं राजा एकान्ते उपविष्टं रत्नगुप्तम् आनायितवान् । तदा महाराजस्य पार्श्वे उपविष्टः भौमदेशस्य युवराजः कुमारकेतुः लक्षितवान् यत् रत्नगुप्तस्य मुखं कान्तिहीनं म्लानं च दृश्यते इति ।

महाराजः रत्नगुप्तम् उद्दिश्य - ''भवान् पुत्रस्य विषये अधिकं चिन्तयन् खिन्नमनस्कः जातः अस्ति इति अहं मन्ये । एतद्विषये अधिकचिन्तनं करणीयं नास्ति मित्र ! मणिकर्णस्य पिता अपि प्रायः पुत्रविषये भवान् इव एव चिन्ताक्रान्तः आसीत् इति मम चिन्तनम्'' इति उक्त्वा पुनः मणिकर्णं पश्यन् - ''मणिकर्ण ! रत्नगुप्तः भवतः पितृतुल्यः । इदानीं भवान् तेन सह गच्छतु । श्वः एकाकी अत्र आगच्छतु च'' इति सूचितवान् । मणिकर्णः महाराजं सन्देहेन एव पुनः पुनः पश्यन् रत्नगुप्तेन सह गन्तुम् आसनात् उत्थितवान् ।

अन्तिमनिर्णयम् अश्रावयित्वा एव राजा प्रेषितवान् यत् ततः असन्तुष्टः आसीत् सः । महती निराशा प्राप्ता आसीत् तेन । तथापि - 'श्वः राजा मदनुकूलम् एव निर्णयं श्रावयेत्' इति चिन्तनम् आसीत् तस्य । सः रत्नगुप्तः च पुनरपि राजानं विनयेन प्रणम्य ततः निर्गतवन्तौ ।

- *(अनुवर्तते)*





# चित्रशीर्षिकास्पर्धा

अधस्तनचित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?
समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -
**चन्दमामा** (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५





युक्ता शीर्षिका नवेम्बर् - २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू. १००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका जनवरी - २००० मासे प्रकाशयिष्यते ।

## अभिनन्दनानि



**'सप्टम्बर्' मासीयस्पर्धाशीर्षिकाप्रेषिका-**

**जयलक्ष्मीः**
चेडिचेरी, इङ्कुर, कन्नुर
केरला - ६७० ५९३



*प्रथमचित्रम्* - **निरावरणः शार्दूलः ।**
*द्वितीयचित्रम्* - **सावरणो नरशार्दूलः ।**

